श्रीकाशीजीमेंमहल्लाहउँकटोरात्रिलोकनाथकेफाटककेभीतररामदाससावकेमकानमेंसूर्य्य
प्रभाकरछापाखानेमेंहजारीलालगनेसप्रसादकेहुहागयामाहोल छापागयालिखाविन्ध्ये
श्वरीमिश्र छापनेवालाधन्नूकारीगरजिसकोलेनाहोयसोचांदनीचौकमेंकुंजगलीकेपश्चिमफा
।टककेपास हजारीलालगनेसप्रसादकेदुकानपरमिलेगा ॥ सम्वत् १९३३ मि॰फागुनसु॰११शनि

ग.मा श्रीगणेशायनमः श्रीगुरुभ्योनमः सूतउवाच शौनकाद्यैर्महाभागैर्देवर्षिःसहनारदः सनत्कुमारंपप्रच्छप्रणम्यविधिपूर्व
१ १ नारदउवाच सनत्कुमारमेब्रूहितीर्थंतीर्थोत्तमोत्तमं तारकंसर्वभूतानांपठतांशृण्वतांतथा २ सनत्कुमारउवा
स्येतीर्थंपरंपुण्यंश्राद्धादौसर्वतारकं गयातीर्थंसर्वदेशे तीर्थेभ्योप्यधिकंशृणु ३ गयासुरस्तपस्तेपेब्रह्मणाक्रतवे
नः प्रार्थितस्तस्यशिरसिशिलांधर्मोह्यधारयत् ४ तत्रब्रह्माकरोद्यागंस्थितश्चादिगदाधरः फल्गुतीर्थादिरूपेण
निश्चलार्थमहर्निशं ५ गयासुरस्यविप्रेंद्रब्रह्माद्यैर्देवतैःसह कृतयज्ञोददौब्रह्माब्राह्मणेभ्योगृहादिकं ६ श्वेतकल्पे
वाराहेगयोयागमकारयत् गयानाम्नागयाख्यातंक्षेत्रंब्रह्मर्षिकांक्षितं ७ कांक्षंतिपितरःपुत्रान्नरकाद्भयभीरवः ग
यांयास्यतियःपुत्रःसनस्त्राताभविष्यति ८ गयाप्राप्तंसुतंदृष्ट्वापितृणामुत्सवोभवेत् पद्भ्यामपिजलंस्पृष्ट्वासोस्मभ्यंकिं
लदास्यति ९ एष्टव्याबहवपुत्रायद्येकोपिगयांव्रजेत् यजेद्वाश्वमेधेननीलंवावृषमुत्सृजेत् १० गयांगत्वान्नदातायः
पितरस्तेनपुत्रिणः पक्षत्रयनिवासीचपुनात्यासप्तमंकुलं ११ नोचेत्पंचदशाहंवासप्तरात्रंत्रिरात्रकं महाकल्पकृतं
पापंगयांप्राप्यविनश्यति १२ पिंडंदद्याच्चपित्रादेरात्मनोपितिलैर्विना ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमः १३ या
पंतत्संगजंसर्वंगयाश्राद्धाद्विनश्यति आत्मजोप्यन्यजोवापिगयाभूमौयदातदा १४ यन्नाम्नापातयेत्पिंडंतन्नयेद्ब्र

ग.मा. मनंप्रति २९ स्वर्गारोहणसोपानं पितॄणां च पदे [blot] पदे पदेऽश्वमेधस्य यत्फलं गच्छतो गयां ३० तत्फलं च भवेन्नॄणां समग्रं
२ नात्र संशयः पायसेनाथ चरुणा सक्तुना पिष्टकेन वा ३१ तंडुलैः फलमूलाद्यैर्गयायां पिंडपातनं तिलकल्केन खंडेन गुडेन
सघृतेन वा ३२ केवलेनैव दध्ना वा ऊषेन मधुनापि वा । पिण्याकं सघृतं खंडं पितृभ्योऽक्षय्यमित्युत ३३ दृष्यते पितृभिर्भोज्यं ह
विष्यान्नं मुनीरितं मुष्टिमात्रप्रमाणेन चार्द्रामलकमात्रकं शमीपत्रप्रमाणं पिंडं दद्याद्गयाशिरे ३४ उद्धरेत्सप्तगोत्राणि
कुलमेकोत्तरं शतं पिता माता च भार्या च भगिनी दुहितुः पतिः ३५ पितृष्वसा मातृष्वसा सप्तगोत्रांश्च तारयेत् चतुर्विंशाश्च
विंशाश्च षोडश द्वादशैव हि ३६ रुद्रादशावसुश्चैव कुलमेकोत्तरं शतं एकतः सर्ववस्तूनि रसवंति मधूनि हि ३७ स्थूला
गदाधरं पूज्य फल्गुतीर्थाप्लुतैकतः नावाहनं न दिग्बंधो न दोषो दृष्टिसंभवः ३८ सकारुण्येन कर्तव्यं तीर्थश्राद्धं विच
क्षणैः पिंडासनं पिंडदानं पुनः प्रत्यवनेजनं ३९ दक्षिणा चान्नसंकल्पो तीर्थश्राद्धेष्वयं विधिः अन्यत्रावाहिताः काले
पितरो यांति सुप्रति ४० अत्रागतं सुतं दृष्ट्वा स्वयमायांति सर्वथा तीर्थश्राद्धं प्रयच्छद्भिः पुरुषैः फलकांक्षिभिः ४१ कामं क्रो
धं तथा लोभं त्यक्त्वा कार्यादिकाः क्रियाः ब्रह्मचार्येकभोजी च भूशायी सत्यवाक्शुचिः ४२ सर्वभूतहिते रक्तः स तीर्थफलम
श्नुते तीर्थान्यनुसरन्धीरः पाखंडं पूर्वतस्त्यजेत् ४३ पाखंडं यच्च विज्ञेयं यच्च वै कर्मकामतः तीर्थेषु येन राधीराः कर्मकु २
र्वंति तज्ज्ञताः ४४ यथा ब्रह्मविदो वेद्यं वस्तु वानन्यचेतसः प्रविशंति परे सांख्यं ब्रह्म ब्रह्मपरायणाः ४५ गयायां न हि तत्

स शाश्वतं ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा १५ वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ब्रह्मज्ञानेन किं साध्यं
गोगृहे मरणेन किं १६ वासेन किं कुरुक्षेत्रे यदि पुत्रो गयां व्रजेत् गयायां सर्वकालेषु पिंडं दद्याद्विचक्षणः १७ अधिमा
से जन्मदिने चास्ते पि गुरुशुक्रयोः न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ १८ सकृद्गयाभिगमनं सकृत्पिंडप्रपातनं
दुर्लभं किं पुनमन्ये अस्मिन्नेव व्यवस्थितः १९ प्रमादान्म्रियते क्षेत्रे ब्रह्मादेर्मुक्तिदायके ब्रह्मज्ञानाद्यथा मुक्तिर्ल
भ्यते नात्र संशयः २० कीकटादिमृतानां च पितॄणां तारणाय च तस्मात्सर्वप्रयत्नेन वक्तव्यं सुविचक्षणैः २१ ब्रह्म
प्रकल्पितान्विप्रान् हव्यकव्यादिनार्चयेत् तैस्तुष्टैस्तोषिताः सर्वाः पितृभिः सह देवताः २२ मुंडनं चोपवासश्च सर्वती
र्थेष्वयं विधिः वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयां २३ दंडं प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिंडदः दंडं स्पृष्ट्वा विष्णुप
दे पितृभिः सह मुच्यते २४ नं दंडी किल्विषं धत्ते पुण्यं वा पारमार्थदं अतः सर्वक्रियां त्यक्त्वा विष्णुं ध्यायेत्तु भावुकः २५
सन्न्यसेत्सर्वकर्माणि वेदमेकं न संत्यजेत् मुंडपृष्ठाच्च पूर्वस्मिन्पश्चिमे दक्षिणोत्तरे २६ सार्द्धक्रोशद्वयं मानं गयेति
ब्रह्मणेरितं पंचक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः २७ तन्मध्ये सर्वतीर्थानि त्रैलोक्ये यानि संति वै श्राद्धकृद्यो
गयाक्षेत्रे पितॄणामनृणो हि सः २८ शिरसि श्राद्धकृद्यस्तु कुलानां शतमुद्धरेत् गृहाच्चलितमात्रेण गयायां ग

ग·मा· गतादेवा विष्णुनोक्तास्तमब्रुवन् गयासुरभयाद्देव रक्षास्मानब्रवीद्धरिः १३ ब्रह्माद्या यांतु नं दैत्यं चागमिष्याम्य-
३ हं ततः केशवो गरुडारूढो वरं दातुं गयासुरं १४ सर्वैश्चं स्वस्वमास्थाय निजवाहनमुत्तमं ऊचुस्तं वासुदेवाद्याः कि-
मर्थं तप्यते त्वया १५ संतुष्टाश्चागताः सर्वे वरं ब्रूहि गयासुर गयासुर उवाच यदि तुष्टाश्च मे देवाः। ब्रह्माविष्णुमहे-
3 श्वराः १६ सर्वदेवद्विजातिभ्यो यज्ञतीर्थशिलोच्चयात् देवेभ्योतिपवित्रोहं ऋषिभ्योपि शिवाव्ययात् १७ ज्ञानिभ्य-
श्चापि कर्मिभ्यः धर्मिभ्यश्च तथा पुनः मंत्रिभ्योतिपवित्रोहं पवित्रो भव भो सदा १८ पवित्रमस्तु तं देवाः दैत्यमुक्त्वा ययु-
र्दिवं दृष्ट्वा दैत्यं ततस्पृष्ट्वा सर्वे हरिपुरं ययुः १९ मृत्युलोके त्रये जाते शून्या यमपुरी ह्यभूत् यमइन्द्रादिभिः सार्द्धं
ब्रह्मलोकं ततो गमत् २० ब्रह्माणमूचिरे देवा गयासुरविलोपितः त्वद्दत्तोधिकारस्त्वं गृहाण प्रपितामह २१ ब्रह्मा-
ब्रवीत्तदा देवान्व्रजामो विष्णुमव्ययं ब्रह्मादयोब्रुवन् विष्णुं त्वया दत्तवरोसुरः २२ तद्दर्शनाद्ययुः स्वर्गं शून्यं लो-
कत्रयं ह्यभूत् देवैस्तुष्टो वासुदेवो ब्रह्माणं स वचोब्रवीत् २३ गयासुरं प्रार्थयस्व यज्ञार्थं देहि देहकं विष्णूक्तः
ससुरो ब्रह्मा गत्वापश्यन्महासुरं २४ गयासुरोब्रवीद्दृष्ट्वा ब्रह्माणं त्रिदशैः सह संपूज्योत्थाय विधिवत्प्रणतः राम
प्रश्रयान्वितः २५ गयासुर उवाच अद्य मे सफलं जन्म अद्य मे सफलं तपः यदागतोतिथिर्ब्रह्मा सर्वं प्राप्तं ममाद्य ३

र्थानां गयातीर्थेन तोवरं ५६ मीने मेषे स्थिते सूर्ये कन्यायां कार्मुके घटे दुर्लभं त्रिषु लोकेषु गयायां पिंडपातनं ५७ मकरे वर्त्तमाने च ग्र
हणे चंद्रसूर्ययोः दुर्लभं त्रिषु लोकेषु गयायां पिंडपातनं ५८ गयायां पिंडदानेन यत्फलं लभते नरः न तच्छक्यं मया वक्तुं क
ल्पकोटिशतैरपि ५९ इति श्रीवायुपुराणे श्वेतवाराहकल्पे गयामाहात्म्ये प्रथमोऽध्यायः १ नारद उवाच गयासुरः कथं जातः प्र
भावः किं किमात्मकः तपस्तप्तं कथं तेन कथं देहपवित्रता १ सनत्कुमार उवाच विष्णोर्नाभ्यंबुजाज्जातो ब्रह्मा लोकपिताम
हः प्रजाः ससर्ज संप्रोक्तं पूर्वं देवेन विष्णुना २ आसुरेणैव भावेन ह्यसुरानसृजत्पुरा सौमनस्येन भावेन देवान्सुमनसोऽसृ
जत् ३ गयासुरः सुराणां च महाबलपराक्रमः योजनानां सपादं च शतं तस्योच्छ्रयं स्मृतः ४ स्थूलः षष्टियोजनानां श्रेष्ठो
सौ वैष्णवे स्मृतः कोलाहले गिरिवरे तपस्तेपे सुदारुणं ५ बहुवर्षसहस्राणि निरुच्छ्वासः स्थिरोऽभवत् तत्तपस्तापि
ता देवाः संक्षोभं परमं गताः ६ ब्रह्मलोकं गता देवाः प्रोचुस्ते च पितामहं गयासुराद्रक्ष देव ब्रह्मा देवांस्तथाब्रवीत् ७ व्रजा
मः शंकरं देवाः ब्रह्माद्याश्च गताः शिवं कैलाशे चाब्रुवन्नत्वा रक्ष रक्ष महासुरात् ८ ब्रह्माद्यांश्चाब्रवीच्छंभुः व्रजामः शरणं
हरिं क्षीराब्धौ देवदेवेशः स नः श्रेयो विधास्यति ९ ब्रह्मा महेश्वरो देवाः विष्णुं नत्वा प्रतुष्टुवुः देवा ऊचुः ॐ नमो विष्णवे
भूर्भर्त्रे सर्वेषां प्रभविष्णवे १० रोचिष्णवे जिष्णवे च राक्षसादिग्रसिष्णवे धरिष्णवे खिलस्यास्य योगीनां पारदृष्णवे ११
वर्हिष्णवे ह्यनंताय नमो भ्राजिष्णवे नमः सनत्कुमार उवाच एवं स्तुतो वासुदेवः सुराणां दर्शनं ददौ १२ किमर्थमा

4

अग्निशर्मापि पंचाग्नीन्मुखादेतानथासृजत् दक्षिणाग्निं गार्हपत्यं आहवनीयं तपोमयः ४१ सभ्यावसथ्यौ
देवर्षयेषु यज्ञाः प्रकीर्तिताः यज्ञस्य च प्रतिष्ठार्थे विप्रेभ्यो दक्षिणां ददौ ४२ हुत्वा पूर्णाहुतिं ब्रह्मा स्नात्वा चावभृ
थेसुरः यज्ञवाटे सुरैः सार्द्धं समानीय व्यरोपयत् ४३ ब्रह्मणः सरसि स्नातो तदा दैत्यो महासुरः चलितश्चकि
तो ब्रह्मा धर्मराजमभाषत ४४ जाता गृहे न वशिलातामानीयात्र धारय दैत्यस्य शीघ्रं शिरसि तां धारय ममाज्ञ
या ४५ निश्चलार्थं यमः कृत्वा धारयन्मस्तके शिलां शिलायां धारितायां तु सशिलश्चासुरोचलत् ४६ देवाः
पादैर्लक्ष्मयित्वा तथापि चलितोसुरः ब्रह्मा यव्याकुलो विष्णुं गतः क्षीराब्धिशायिनं ४७ तुष्टाव प्रणतो भूत्वान
त्वा चाहाहृतः प्रभुं ब्रह्मोवाच ब्रह्मांडस्य पते नाथ नमामि जगतां पतिं ४८ पतिं कीर्तिमतां नृणां भुक्तिमुक्तिप्रदाय
के विघ्नकसेनोऽब्रवीद्विष्णुर्देव त्वां स्तौमि पद्मजः ५० हरिराहानयस्व त्वं विष्णूक्तः सततमानयत् अजमूचे हरिः क
स्मादागतोसि वद स्वतत् ५१ ब्रह्मोवाच देवदेव कृते यागे प्रचचाल गयासुरः शिलायां देवरूपिण्यां न्यस्तायां
तस्य मस्तके ५२ रुद्रादिषु च देवेषु संस्थितेष्वसुरोचलत् इदानीं निश्चलार्थं हि प्रसादं कुरु माधव ५३ ब्रह्म
णो वचनं श्रुत्वा ह्याकृष्य स्वशरीरतः मूर्तिं ददौ निश्चलार्थं ब्रह्मणे भगवान्हरिः ५४ आनीय मूर्तिं ब्रह्मापि शिलो

वै २६ योगिन्योगांगवित्सर्वलोकस्वामिन्पितुर्गुरो यदर्थमागतो ब्रह्मन्तत्कार्यं करवाण्यहं २७ ब्रह्मोवाच
पृथिव्यां यानि तीर्थानि दृष्टानि भ्रमता मया यज्ञार्थं न तु तेनानि पवित्राणि शरीरतः २८ त्वया देहं पवित्रं त्वं प्राप्तं वि
ष्णुप्रसादतः अतः पवित्रं देहं स्वं यज्ञार्थं देहि मेऽसुर २९ गयासुर उवाच धन्योऽहं देवदेवेश यद्देहः प्रार्थ्यते त्वया
पितृवंशः कृतार्थोऽहं मातृवंशस्तथैव च ३० त्वय्येवोत्पादितो देहः पवित्रस्तत्त्वयाकृतः सर्वेषामुपकाराय यागो वा
ऽयं भविष्यति ३१ इत्युक्त्वा सोऽपतद्भूमौ श्वेतकल्पे गयासुरः नैर्ऋतीं दिशमाश्रित्य नदा कोलाहले गिरौ ३२ शि
रः कृत्वोत्तरे दैत्यः पादौ कृत्वा तु दक्षिणे ब्रह्मा संभृतसंभारान्मानसानृत्विजोऽसृजत् ३३ अग्निशर्माणममृतं शौ
नकं पांजलिं मृदुं कुमथिं वेदकौंडिन्यं हारीतं काश्यपं कृपं ३४ गार्ग्यं कौशिकवासिष्ठं मुनिं भार्गवमव्ययं वृद्धपारा
शरं काण्वं मांडव्यं श्रुतिकेवलं ३५ श्वेतं सुतालदमनं कुहोत्रं कंकमेव च लौगाक्षिं च महाबाहुं जैगिषव्यं तथैव च
३६ दधिपंचमुखं विघ्नं ऋषभं कर्कमेव च कात्यायनं गोभिलं च मुनिं मिश्रं महाव्रतं ३७ सुपालकं गौतमं च तथा
वेदशिरोव्रतं जटामालिनमव्यग्रं चाट्टहासं च दारुणं ३८ आत्रेयं चाप्यांगिरसं सौपमन्युं महाव्रतं गोकर्णं च गुहा
वासं शिखंडिनमुमाव्रतं ३९ एतानन्यांश्च विप्रेन्द्रान्देवलोकपितामहः परिकल्प्याकरोद्यागं गयासुरशरीरके ४०

ग॰मा॰ लादिकं एको विष्णुस्त्रिधामूर्त्तिर्यो वत्संकीर्त्यते बुधैः ६९ तावद्गयाशिरःक्षेत्रं स्थानिमेतुसदाभुवि सहात्मानं सहस्रं च कुल
५ नां चोद्धरेत्तु सः ७० व्यक्ताव्यक्तस्वरूपेण पूर्यं निष्ठन्तु सर्वदा गदाधरः स्वयं लोकान् पूजनाद्धनाशनः ७१ श्राद्धं सपिंडकं ये
षां ब्रह्मलोकं प्रयांतु ते ब्रह्महत्यादिकं पापं विनश्यंति च सेविनां ७२ नैमिषं पुष्करं गंगां प्रयागं च विमुक्तिदं एतान्यन्यानि ती
र्थानि दिवि भुव्यंतरिक्षतः ७३ समायांतु सदा नॄणां प्रयच्छंतु हितं नॄणां किं बहूक्त्या सुरेशानां युष्मास्वेकापि देवता ७४ चेन्न
निष्ठेदहं चापि समयः प्रतिपाल्यतां गयासुरवचः श्रुत्वा प्रोचुर्विष्ण्वादयः सुराः ७५ त्वया यत्प्रार्थितं सर्वं तद्भविष्यत्यसंशयं
पितॄणां वै कुलशतमात्मानं पिंडदानतः ७६ श्राद्धादिना नयिष्यंति ब्रह्मलोकमनामयं अस्मत्पदानर्चयित्वा यास्यंति पर
मां गतिं ७७ देवैर्दत्तवरो दैत्यो हर्षितो निश्चलोभवत् स्थितेष्वेव देवेषु ब्राह्मणेभ्यो ददौ ह्यजः ७८ ग्रामान्सु पंच पंचाशत्पं
चक्रोशं गयां तथा हान्कृत्वा ददौ दिव्यान्सर्वोपस्करसंयुतान् ७९ कामधेनुं कल्पवृक्षं पारिजातादिकांस्तरून् महानदीं
क्षीरवाहां घृतकुल्यां तथैव च ८० मधुस्रवां मधुकुल्यां दध्याज्यादिसरांसि च सुवर्णदीर्घिकां चैव बहून्नाद्रिपर्वतान् ८१
भक्ष्यभोज्यफलादींश्च सर्वं ब्रह्मा सृजन्ददौ न च्यं च विप्रेंद्रा अन्यान्नुक्त्वा ददौ ह्यजः ८२ दत्वा ययौ ब्रह्मलो
कं नत्वा ह्याद्गदाधरं धर्मारण्ये तत्र धर्मो याजयित्वा ययाचिरे ८३ धर्मयागे च लोभाद्धि प्रतिगृह्य धनादिकं तांबूलं
पंचरत्नानि च लेनैव ददौ नृपः ८४ धर्मयागस्य वै भूमे

यांसमधारयत् तथापिचलितंवीक्ष्यपुनर्देवमिहाह्वयत् आगत्यविष्णुःक्षीराब्धेःशिलायांसंस्थितोभवत् ५५
जनार्दनाभिधानेनपुंडरीकाक्षनामतः शिलायांनिश्चलार्थंहिस्वयंमादिगदाधरः ५६ निश्चलार्थंपंचधासीत्शिला
यांप्रपितामहः पितामहोथफल्ग्वीशः केदारःकनकेश्वरः ५६ ब्रह्मास्थितःस्वयंतत्रगजरूपिविनायकः गया
दित्यश्चोत्तरार्कोदक्षिणार्कस्त्रिधारविः ५७ लक्ष्मीसीताभिधानेनस्थितावैमंगलाह्वया गायत्रीचैवसावित्रीत्रिसं
ध्येयंसरस्वती ५८ इन्द्रोबृहस्पतिःपूषावसवोष्टौमुनीश्वराः विश्वेदेवाश्चाश्विनौचमरुतोविश्वनायकः ५९ य
क्षोरगगंधर्वास्तस्थुर्देवाःस्वशक्तितः आद्ययागदयाचासौयस्माद्दैत्यस्थिरीकृतः ६० स्थितस्तूर्ध्वेवहरिणातस्मा
दादिगदाधरः ऊचेगयासुरोदेवान्किमर्थंवंचितोह्यहं ६१ यज्ञार्थंब्रह्मणेदत्तंशरीरममलंमया विष्णोर्वचनमा
त्रेणकिंनस्यान्निश्चलोह्यहं ६२ यासुरैःपीडितोत्यर्थंगदयाहरिणातथा पीड्यश्चयद्यहंदेवाःप्रसन्नाःसंतुसर्व
दा ६३ गदाधरादयस्तुष्टाःप्रोचुश्चापिगयासुरम् वरंब्रूहिप्रसन्नास्मोदेवानूचेगयासुरः ६४ गयासुरउवाच याव
त्पृथ्वीपर्वताश्चयावच्चंद्रार्कतारकाः तावच्छिलायांतिष्ठंतुब्रह्मविष्णुमहेश्वराः ६५ अन्येचसकलादेवाःमन्ना
म्नाक्षेत्रमस्तुवै पंचक्रोशंगयाक्षेत्रंक्रोशमेकंगयाशिरः ६६ तन्मध्येसर्वतीर्थानित्रैलोक्येयानितानिवै ॥ ०॥
गंगाद्याःसुमहानद्यःसरांसिविविधानिच तेदेवास्तानितीर्थानिमयच्छंतुहितंनृणां ६८ स्नानादितर्पणंकृत्वापिंडदानाम्

ग.मा. संतिजगत्त्रये धर्मोधर्मव्रतायांतुत्रिषुलोकेषुमार्गयन् ४ नानुरूपंवरंलेभेधर्मोकावरसिद्धये तपःकु-
६ रुवरार्थीत्वंतथेत्युक्त्वावनंययौ ५ कन्यासाचतपस्तेपेसर्वेषांदुस्तरंचयत् वायुभक्षाश्वेतकल्पेयुगानामयु-
तंपुरा ६ ब्रह्मणोमानसःपुत्रोमरीचिर्नामविश्रुतः पर्यटन्पृथिवींसर्वांकन्यारत्नंददर्शसः ७ रूपयौव-
नसंपन्नांपरमेतपसिस्थितां पप्रच्छाथमरीचिस्तांकात्वंकस्यासितद्वद ८ रूपेणानेनमांनूनंविमोहयसि
6 सुव्रते ब्रह्मात्मजोहंविख्यातोमरीचिर्वेदपारगः ९ मरीचेर्वचनंश्रुत्वाकन्याप्रोवाचतंमुनिं अहंधर्मव्रताना-
मधर्मपुत्रीतपोन्विता १० पतिव्रतार्थंविप्रेंद्रचरामिपरमंतपः कामावाप्तिर्भवेद्यावत्तावदेतत्प्रवर्तनम् ११
धर्मव्रतांमरीचिस्तामुवाचप्रीतिपूर्वकं पतिव्रतादर्शनात्मेभविष्यसिशुभव्रते १२ पतिव्रतेच्छयापृथ्वींविच-
रामिस्त्वहर्निशं त्वंचपतिव्रताज्ञातांभजत्वंभजमांवरं लोकेनत्वादृशीकन्याममतुल्योनतेवरः १३ धर्मव्रतेध-
र्मपुत्रीतस्मात्त्वंभजमेधुना धर्मव्रतामुनिंप्राहधर्मंयाचयसुव्रत १४ तच्छ्रुत्वाथधर्ममगमन्मुनिर्धर्मोददर्शह
तेजःपुंजवरंनत्वाआसनार्घ्यादिनार्चयत् १५ किमर्थमागतःपृष्टोमरीचिर्धर्ममब्रवीत् कंन्यार्थमागताःपृ- राम
थ्वींदृष्टातेकन्यकावरा १६ मह्यंकंन्यांचतांदेहिश्रेयस्तवभविष्यति अर्घ्यादिनासमभ्यर्च्यधर्मःप्रोवेचतंथ ६

स्वर्गलोकेगतेसति ८२ ततोब्रह्मासमागत्यब्राह्मणांस्तानशापयत् कृतवंतोयतोलोभंमद्यज्ञेष्वखिलेष्वपि
८३ तस्मात्तृष्णाधिकायूयंभविष्यथसदाद्विजाः युष्माकंवारिवाहास्यान्नदीपाषाणपर्वताः ८४ नद्यादयोवारि
वाहामृदाद्याःप्रचुराःगृहाः कामधेनुःकल्पवृक्षोस्वर्लोकमुपतिष्ठतु ८५ एवंशप्ताब्राह्मणास्तेप्रार्थयंतोब्रुव
न्तञ्च त्वयायद्दत्तमखिलंतत्सर्वंशापतोगतं ८६ जीवनार्थंप्रसादंनोभगवन्कर्तुमर्हसि तच्छ्रुत्वाब्राह्मणान्ब्र
ह्माप्रोवाचेदंदयान्वितः ८७ तीर्थोपजीविकायूयमाचन्द्रार्कंभविष्यथ लोकाःपुण्यागयायांयेश्राद्धिनोब्रह्मलो
कगा ८८ युष्मान्येपूजयिष्यन्तितैरहंपूजितःसदा आक्रांतंदैत्यजठरंधर्मेणाविरजाद्रिणा ८९ नाभिकूप
समीपेचदेवीचविरजास्थिता तत्रपिंडादिकंदत्वात्रिःसप्तकुलमुद्धरेत् ९० महेन्द्रगिरिणातस्यकृतोपादौसु
निश्चलौ तत्रापिपिंडकृत्सप्तकुलान्युद्धरतेनरः ९१ इतिश्रीवा० श्वेतवाराहकल्पेगयामाहात्म्येद्वितीयोध्या
यः २॥ नारदउवाच कथंशिलासमुत्पन्नायस्यांक्रांतोगयासुरः किंरूपंकिंचमाहात्म्यंतस्याःकिंवदनामच १
सनत्कुमारउवाच असीद्धर्मोमहातेजाःसर्वविज्ञानपारगः विश्वरूपाचतत्पत्नीभर्तृव्रतपरायणा २ तस्यां
धर्मात्समुत्पन्नाकन्याधर्मव्रतासती सर्वलक्षणसंपन्नालक्ष्मीरिवगुणाधिका ३ तस्यांयेतुगुणाह्यासंस्तेन

शृणुनारदयत्पुण्यंकथयामिपुनस्तव ४

ग.मा. आकुलासाप्रजापतिं नत्वाशाप्यानेत्रस्थाणं मग्निं प्रज्वाल्य चैधनैः ३१ गार्हपत्ये स्थिता चक्रे तपः परमदुष्करं तथाश्र २२
७ सोमरीचिश्च तपस्तेपे सुदारुणं ३२ पतिव्रतायास्तपसा मरीचेस्तपसा तथा इंद्रादयश्च संतप्ताः गतास्ते शरणं ह
रिं ३३ ऊचुः क्षीरांबुधौ सुप्तं संतप्तास्तपसा हरे पतिव्रतायास्तपसा त्रैलोक्यं रक्ष केशव ३४ इंद्रादीनां वचः श्रुत्वा
विष्णुर्धर्मव्रतां ययौ तस्मिन्नेव काले तु प्रबुद्धो भगवानजः ३५ ऊचुर्धर्मव्रतां देवास्त्वग्निस्थां सह केशवाः अग्नि
मध्ये तपः कर्तुं केन शक्यं पतिव्रते ३६ त्वया कृतं यत्परमं सर्वलोकभयंकरं वरं वरय धर्मज्ञे अस्मत्तो यदभी।
प्सितं ३७ विष्ण्वादीनां वचः श्रुत्वा देवान्धर्मव्रताब्रवीत् भर्तुः शापमशक्ताहं निवर्त्तयितुमंजसा ३८ दत्तो मरी
चिना शापो ह्यसह्यः पराकृत्तु धर्मव्रतावचः श्रुत्वा प्रोचुरेनां सुराः पुनः ३९ धर्मव्रते धर्मपुत्रि शापोयं परमर्षिणा
दत्तस्तेन निराकर्तुं शक्यो देवद्विजातिभिः ४० तस्मादन्यवरं ब्रूहि यतो धर्मस्य संस्थिति भवेद्वै त्रिषु लोकेषु वेदो
क्तस्य शुभव्रते ४१ देवानां वचनं श्रुत्वा देवान्धर्मव्रताब्रवीत् भर्तुः शापान्मोचयितुं न शक्नुथ द्विजामराः ४२ म
ह्यं वरं प्रयच्छध्वं एवं विधमनुत्तमं शिलाहं हि भविष्यामि ब्रह्मांडे पावनी वराः ४३ नदीनदसरस्तीर्थदेवादिभ्योति राम
पावनी ऋष्यादिभ्यो मुनिभ्यश्च मुख्यदेवेभ्य एव च ४४ तीर्थान्यपि सर्वाणि मे स्वाक्षेत्रमुखास्तथा तिष्ठंति देवाः स ७



नक्षत्रप्रमुखा ग्रहाः १

तितं १७ धर्मव्रतांसमानीयदत्तवाल्लांमरीचये वरंचदत्तवांस्तस्मैनद्याकंचयथाकृतं १८ अग्निहोत्रेणस
हितंस्वाश्रमंतांद्विजोनयत् रेमेमुनिस्तयासार्द्धंयथाविष्णुःश्रियासह १९ पार्वत्याचयथाशंभुःसावित्र्याच
यथाप्यजः जज्ञेपुत्रशतंतस्यांमरीचिर्विष्णुगोपमं २० मारीचिःफलपुष्पार्थंवनंगत्वासमागतः श्रांतःकदा
चित्तांपत्नीमुवाचेतिपतिव्रतां २१ भुक्तानुशयनस्थस्यपादसंवाहनंकुरु धर्मव्रतातथेत्युक्त्वाशयानस्यच
सामुनेः २२ पादसंवाहनंचक्रेघृतेनाभ्यज्यतत्परा निद्रायमानेथमुनौब्रह्मातंदेशमागतः २३ इयेषदृष्ट्वाब्र
ह्माणंमनसार्चयितुंप्रभुं पादसंवाहनंकुर्यांकिंब्रह्माणंप्रपूजयेत् २४ इत्याकुलासमुत्तस्थौमत्वासाचगु
रोर्गुरुं अर्घ्यपाद्यादिकंकृत्वाब्रह्माणंसमपूजयत् २५ संस्कृतायांतुशय्यायांविश्राममकरोदजः एतस्मिन्
न्तरेभर्तासमुत्तस्थौस्वनेत्सतः २६ धर्मव्रतामपश्यन्सविप्रःक्रुद्धःशशापतां पादसंवाहनंत्यक्त्वायस्मादाज्ञाविहा
यमे २७ गतान्यत्रततःपापाच्छापदग्धाशिलाभव भर्त्रोधर्मव्रताशप्तामरीचिंप्राहकोपितं शयानेत्वयिसं
प्राप्तोब्रह्मात्वज्जनकोगुरुः २८ त्वयोत्थायहिकर्तव्यस्तगुरोःपुजनंसदा मयातुधर्मचारिण्यातवकार्यंकृतंमुने
२९ अदोषाहंयतःशप्तातस्माच्छापंददामिते त्वंचशापंमहादेवात्भर्तःप्राप्स्यस्यसंशयं ३० व्याकुलंतंपतिंदृष्ट्वा

यथाविष्णुर्यथाब्रह्मायथादेवोमहेश्वरः ब्रह्मांडेचयथामेरुस्तथेयंदेवरूपिणी ॥७॥
ग·मा· दादिरूपेणस्थास्यामस्त्वयिसुस्थिराः ५७ वरंशिलायैदत्वैवंतथाहाचांतर्दधुःसुराः॥ इतिवायुपु०श्वे०गयामाहात्म्येध
८ र्मशिलामहिमानंनामतृतीयोध्यायः ३॥ सनत्कुमारउवाच वक्ष्येशिलायामाहात्म्यंशृणुनारदमुक्तिदं यस्यांगयेतिदे
वाश्चमाहात्म्यंमुनिपुंगव १ शिलास्थितापृथिव्यांसादेवरूपातिपावनी विचित्रारव्यंशिलातीर्थंत्रिषुलोकेषुविश्रु
तं २ तस्याःसंस्पर्शनाल्लोकाःसर्वेहरिपुरंययुः शून्येलोकत्रयेजातेशून्यायमपुरीह्यभूत् यमोगमत्ब्रह्मलोकंग
त्वाब्रह्माणमब्रवीत् ३ अधिकारंगृहाणाद्ययमदंडंपितामह यममूचेततोब्रह्मास्वगृहेधारयस्वतां ४ ब्रह्मोक्तोध
र्मराजस्तुगृहेतांसमधारयत् यमोधिकारंस्वचक्रेपापिनांशासनादिकं ५ एवंविधागुरुतराशिलाजगतिविश्रु
ता गयासुरस्यशिरसिगुरुत्वाद्धारितायतः ६ अतःपवित्रयायोगःपितॄणांमोक्षदायकः पवित्रयोगयायोगेह्यमेधमजो
करोत् ७ भागार्थमागतान्दृष्ट्वाविष्ण्वाद्यानब्रवीच्छिला शिलास्थितौप्रतिज्ञांतुकुर्वंतुपितृमुक्तये ८ तथेत्युक्त्वा
शिलायांतेदेवाविष्ण्वादयःस्थिताः शिलारूपेणमूर्त्ताश्चपदरूपेणदेवताः ९ मूर्तामूर्तस्वरूपेणस्थिताःसर्वेप्र
तिज्ञया दैत्यस्यमुंडपृष्ठेतुयस्मात्सासंस्थिताशिला १० तस्मात्समुंडपृष्ठाद्रिःपितॄणांब्रह्मलोकदः आच्छादित राम:
शिलापादःप्रभासेनाद्रिणाततः ११ भासितोभास्करेणासौप्रभासःपरिकीर्तितः प्रभासंहिविनिर्भिद्यशिलांगु ८

कलादेव्यश्चमुनयस्तथा ४५ मूर्त्तामूर्त्तस्वरूपेण पदरूपेण देवता व्यक्ताव्यक्तास्वरूपेण मयितिष्ठन्तु सर्वदा मां दृष्ट्वा
सर्वेलोकाश्चमुक्ताः पापोपपातकैः भवेयुर्देवशार्दूला ब्रह्मविष्णुमहेश्वराः ४७ शिलास्थितेषु तीर्थेषु स्नानं कृत्वा च
तर्पणं श्राद्धं सपिण्डकं येषां विष्णुलोकं प्रयान्तु ते ४८ गदाधरोदक्ष्य तीर्थं सर्वतीर्थोत्तमोत्तमं मुक्तिर्भवतु पितॄणां का
र्तिणां श्राद्धतः सदा ४६ जरायुजाण्डजा वापि स्वेदजा वापि चोद्भिजाः त्यक्त्वा देहं शिलायां तु यान्ति विष्णुस्वरूपतां ४७ यथा
र्चिते दत्ते सर्वे यज्ञाः पूर्णा भवन्ति च तथा श्राद्धं तर्पणं च स्नानं वाक्षय्यमस्त्विह ४८ मम देहे सुरेशानां ये जपन्ति मृत्तादिकं
अचिरेणापि ते सिद्धाः सिद्धिभाजो भवन्ति वै ४९ पितॄणां कुलसाहस्रं आत्मना सहितं नराः श्राद्धादिना समुद्धृत्य विष्णुलो
कं नयेद्ध्रुवं ५० यावन्त्यश्च सरिच्छ्रेष्ठा गङ्गाद्याश्च ह्रदाः शुभाः समुद्राद्याः सरोमुख्या मानसाद्याः सुरेश्वराः ५१ एको वि
ष्णुस्त्रिधा मूर्त्तिर्यावन्तः कीर्त्यन्ते बुधैः तावच्छिलायां सर्वाणि तीर्थानि सह दैवतैः ५२ सदा तिष्ठन्तु मुनयो गन्धर्वाणां गणा
श्च ये यावद्भवति ब्रह्माण्डं तावत्तिष्ठतु वै शिला ५३ मम देहे प्रमरूपे च ये जपन्ति घृतादिकं जुहृत्यग्नौ तु तेषां वै अक्षय्यं चो
पतिष्ठतु ५४ अक्षय्यं तु भवेच्छ्राद्धं जपहोमतपांसि च शिलापर्वतरूपेण मयि तिष्ठन्तु भोः सुराः ५५ देवरूपा वचः श्रुत्वा
देवाः प्रोचुः पतिव्रतां त्वया यत्प्रार्थितं सर्वं तद्भविष्यत्यसंशयं ५६ गयासुरस्य शिरसि भविष्यति यदा स्थिरा तदा पा

ग.मा. दोजायतेनरः २६ शिलायां जघनं भूयः समाक्रांतेन येन तु धर्मराजेन संप्रोक्तो न गच्छेति नगस्मृतः २७ य
९ मराज धर्मराजौ निश्चलार्थं व्यवस्थितौ ताभ्यां वलिं प्रदास्यामि पितृणां मुक्तिहेतवे २८ श्वानौ श्यामशबलौ
9 वैवस्वतकुलोद्भवौ ताभ्यां वलिं प्रदास्यामि स्यातामेतावहिंसकौ २९ शिलाया दक्षिणे हस्ते स्थापितः कुंडपर्वतः
निमिषादित्यर्द्धस्थानमागतेन महेश्वराः ३० वहिर्द्वीवरुणो रुद्राः चत्वारः पितृमोक्षदाः भरताश्रममासाद्य तेनना
ल्लत्यजेन्नरः ३१ पापेभ्यः श्वापदपापेभ्यो मुच्यते पितृभिः सह यत्र कुत्रापि देवर्षे भरतस्याश्रमे यतः ३२ स्नातः
श्राद्धादिकं कृत्वा नाकल्पेपि न हीयते गयायां चाक्षयां श्राद्धं जपहोमतपांसि च ३३ सर्वेमानं त्यमाहूय दत्तं च
भरताश्रमे चतुर्युगस्वरूपेण चतस्रश्चापि मूर्त्तयः ३४ दृष्टाः स्पृष्टाः पूजितास्ताः पितृणां मुक्तिदायकाः मुक्तिवा
मनदूते वतारकारको विधिः परः ३५ त्रिविक्रमं च ब्रह्माणं यः पश्येत्पुरुषोत्तमं पितृभिः सह धर्मात्मा स यातिप
रमां गतिं ३६ शिलाया वामहस्तेपि स्थापितो घंटकोगिरिः स्थापितः पिंडदस्तत्र पितॄन्ब्रह्मपुरं नयेत् ३७ नैमिषा
रण्यपार्श्वे तु ईजे ब्रह्मा सुरैः सह मुख्यसंज्ञं हि तत्तीर्थं देवास्तत्र पदे स्थिताः ३८ तेषु तेषु पदेष्वेव तीर्थेषु मुनिस राम
त्तम यत्किंचिदशुभं कर्म तत्सर्वं नश्यति नारद ३९ तन्नैमिषवरं पुण्यं सेवितं पुण्यपूरुषैः तत्र व्यासः शुकः पैलः ९

१ वान्यतः        २ न्मोचयेत्पितॄन्॥

ष्टो विनिर्गतः १२ अंगुष्ठस्थितदृष्टोपि प्रभासे यः प्रकीर्तितः शिलांगुष्ठैकदेशोयः सा च प्रेतशिला स्मृता १३ पिंड
दानाच्च तस्यां तु प्रेतत्वान्मुच्यते नरैः रामो देव्या सह स्नातो रामतीर्थं ततः स्मृतं प्रार्थितोथ महानद्या राम स्नातो
भवेद्यदि रामतीर्थं ततो भूत्वा त्रिषु लोकेषु विश्रुतं १५ जन्मांतरशतैः सांग्रं यन्मया दुष्कृतं कृतं तत्सर्वं विलयं या
तु रामतीर्थाभिषेचनात् १६ मंत्रेणानेन यः स्नात्वा श्राद्धं कुर्वीत मानवः रामतीर्थे पिंडदस्तु विष्णुलोकं प्रयात्यसौ
१७ तथेत्युक्त्वा स्थितो रामः सीतया भरताश्रमे राम राम महाबाहो देवानामभयंकर १८ त्वां नमस्येह देवेश।
मम नश्यंतु पातकं मंत्रेणानेन यः स्नात्वा श्राद्धं कृत्वा सपिंडकं १९ प्रेतत्वात्तस्य पितरो विमुक्ताः पितृतां ययुः आ
पस्त्वमसि देवेश ज्योतिषां पतिरेव च २० पापं नाशय मे देव मनोवाक्कायकर्मजं नमस्कृत्य प्रभासेशं भासमा
नं शिवं व्रजेत् २१ तं च शंभुं नमस्कृत्य कुर्याद्यमबलिं ततः रामे वनं गते शैलमागत्य भरतः स्थितः २२ पितृ
पिंडादिकं कृत्वा रामे प्राप्ते स्थाप्य ततश्च रामं सीतां लक्ष्मणं च मुनीन्संस्थापितवान्प्रभुः २३ भरतस्याश्रमं पुण्यं
नित्यं पुण्यद्रुमैर्वृतं मतंगस्य पदं तत्र दृश्यते सर्वमानवैः २४ स्थापितं धर्मसर्वस्वं लोकस्यास्य निदर्शनात् म
तंगस्य पदे श्राद्धी सर्वान्तारयते पितॄन् २५ रामतीर्थे नरः स्नात्वा रामं सीतां समर्च्य च रामेश्वरं प्रणम्याथ श्मानं

ग.मा वरंलोमेशमाहात्म्यंभुविदुर्लभं लोपामुद्रातथाभार्यापितॄन्पितॄन्ब्रह्मपुरंनयेत् ५५ कुंडनाम्यस्तपस्तेपेसितांद्रे
१० दक्षिणेगिरौ वटेवटेश्वरस्तत्रस्थितःप्रपितामहः ५६ तदग्रेरुक्मिणीकुंडंपश्चिमेकपिलानदी कपिलेशोन
दीतीरेअमासोमसमागमे ५७ कपिलायांनरःस्नात्वाकपिलेशंसमर्च्यच कृतेश्राद्धेपिंडदानेपितरोमोक्षमाप्नुयुः
५७ तत्राग्निधारागिरिवरादागतोद्यंतकान्तनु तत्रसारस्वतंकुंडंसरस्वत्योपकल्पितं ५८ शुक्रस्तत्रस्तुतेसार्धं
डामर्कोदिभिप्रभुः तत्रतत्रमुनीन्द्राणांपदेषुमुनिसत्तम ५९ श्राद्धपिंडादिकृत्स्नातःपितॄणांतारयेन्नरः शिलाया
वामहस्तेपिगृध्रकूटोगिरिर्द्धृतः ६० गृध्ररूपेणसंसिद्धःतपस्तप्त्वामहर्षयः अतोगिरिर्गृध्रवटस्तत्रगृध्रेश्वरस्थि
तः ६१ दृष्ट्वागृध्रेश्वरंनत्वायातिशंभोःपदंनरः तत्रगृध्रवटंसाधःपिंडदःशिवलोकभाक् ६२ तत्रगृध्रवटंनत्वा
प्राप्तकामोदिवंव्रजेत् ऋणमोक्षंपापमोक्षंशिवंदृष्ट्वाशिवंव्रजेत् ६३ मूलक्षेत्रंचतत्रास्तेपिंडदःस्वर्नयेत्पितॄन्
आदिपालेनगिरिणासमाक्रांतंशिलोदरं ६४ तत्रास्तेगजरूपेणविघ्नेशोविघ्ननाशनः तंदृष्ट्वामुच्यतेविघ्नैः
पितॄन्ब्रह्मपुरंनयेत् ६५ गयानाभौसुषुम्नायांपिंडदःस्वर्नयेत्पितॄन् शिलायावामपादेतुस्थापितःप्रेतपर्वतः राम
६६ धर्मराजेनपापाढ्योगिरिःप्रेतशिलाश्रयः पादेनदूरेनिक्षिप्तःशिलायाःपापभावतः ६८ गतःशिलायांसंसर्गो १०

करोवेधाशिवोहरिः ४० तेषांदर्शनमात्रेणमुच्यंतेपातकैःनरः वामहस्तेशिलायास्तुयद्याउदंकोगिरिः ४१ स
पर्वतःसमानीतोऽगस्त्येनमहात्मना तत्रब्रह्माहरश्चैवतपश्चोग्रंचचक्रतुः४२ तत्रागस्त्यहिवरंकुंडंत्रैलोक्य
दुर्लभं यत्रसूर्यषष्ठकंसिद्धंतपःस्नात्वाशिवंगतं ४३ कुंडेसूर्यषष्ठकंनत्वापितृन्ब्रह्मपुरंनयेत् अगस्त्येनाथदेव
वैऊदयाद्रिमहात्मना ४४ शिलायावामहस्तेपिस्थापितोगिरिराट्शुभः वादित्राद्यैर्दिव्यगीतैराद्योवादित्रकोगि
रिः ४५ तत्रविद्याधरोनामगंधर्वोऽप्सरसांगणैः सेवितेद्यापिगीतानिदिव्यानिसहगायति ४६ मोहनश्चप्रभूनोयश्च।
शैलूषोमोहनोत्तमः पर्वतोनारदोध्यानीसंगीतिःपुष्पदंतकः ४७ हाहाहूहूप्रभृतयोगीतनादमचक्रिरे तत्रचित्रर
थोनामसर्वगंधर्वसंवृतः ४८ गायन्तुमधुराण्येवगीतान्यद्वैमहोत्सवैः अतःसपर्वतोदेवैःसेव्यतेद्यापिनित्य
शः ४९ धर्मोजस्तत्रदेवेशोहरोभस्मांगरागवान् पार्वत्यासहितोरुद्रःपर्वतेगीतनादिते ५० मोदतेयाजितोध्यातः।
पितृणांपरमांगतिं गयायांपरमात्माहिदृश्यतेद्यापिमुक्तिदः ५१ ह्रियतेवैक्षमवीमायातथा——रुद्राचनेमुने शि
लायादक्षिणेहस्तेभस्मकूटोगिरिर्धृतः ५२ धर्मराजेनतत्रासेऽगस्त्यःसहभार्यया अगस्त्यस्यपदेस्नातःपिंडदो
ब्रह्मलोकगः ५३ पितृभिःसहधर्मात्मापूज्यमानोदिवौकसां भगवांस्तत्रसंयम्यतपश्चोग्रंचचारह ५४ ब्राह्मणश्च।

णनमेदंमुनिपुंगव ८३ तासुसर्वासुयः स्नात्वापिंडदः स्वर्गयेत्पितॄन् ब्रह्मयोनिंप्रविश्याथनिर्गच्छेद्यस्तु
११ मानवः परंब्रह्मस्ययातीहविमुक्तोयोनिसंकटात् निःक्षीरायांपुष्करिण्यांस्नातःश्राद्धादिकृन्नरः ८५ कुर्यात्क्रौंच
पदेदिव्येनियमाद्वासरत्रयं सर्वान्पितॄन्नयेत्स्वर्गंपंचपापिनएवच ८६ जनार्दनोभस्मकूटेतस्यहस्तेतुपिंडदः आ
त्मनोप्यथवान्येषांसव्येनापितिलैर्विना ८७ जीवतांदधिसंमिश्रंसर्वेतेविष्णुलोकगाः यस्तुपिंडोमयादत्तोतवह
स्तेजनार्दन ८८ यमुद्दिश्यत्वयादेवदेहिपिंडंस्वतेप्रभो एषपिंडोमयादत्तस्तवहस्तेजनार्दन ८९ अंतकालेग
तेमह्यंत्वंमेदाताभविष्यसि जनार्दननमस्तुभ्यंनमस्तेपितृमोक्षद ९० पितृमातर्नमस्तेस्तुनमस्तेपितृरूपिणे
गयायांपितृरूपेणस्वयमेवजनार्दनः ९१ तंध्यात्वापुंडरीकाक्षंमुच्यतेचऋणत्रयात् नमस्तेपुंडरीकाक्षऋण
त्रयविमोचन ९२ लक्ष्मीकांतनमस्तेस्तुपितॄणांमोक्षदोभव। वामजानुंचसंपात्यनत्वाभीमंजनार्दनः ९३ श्रा
द्धंसपिंडकंकृत्वापितृभिर्विष्णुलोकभा पितृभिःसहधर्मात्माकुलानांचशतेनच ९४ शिलायांव्यक्तरूपेणव्य
क्ताव्यक्तात्मनास्थिताः लक्ष्मीशोविबुधैःसार्द्धंतस्माद्देवमयीशिला ९५ इतिश्रीवायुपुराणेश्वे०क०गया०धर्म राम
शिलायावर्णनंनामचतुर्थोऽध्यायः ॥ ४ ॥ नारदउवाच ॥ कथंव्यक्तस्वरूपेणस्थितश्चादिगदाधरः कथमव्य ११

प्रेतकूटःपवित्रंतत्प्रेतकूटंचतत्रास्तेदेवाःस्तत्रपदैःस्थिताः ६९ तत्रपिंडादिकंकृत्वाप्रेतत्वान्मुच्यतेनरः पृथक्स्थि-
ताश्चबहवोविघ्नकारिणएवते ७० श्राद्धादिकारिणांनॄणांतीर्थेपितृविमुक्तये प्रेताधानुष्करूपेणकरग्रहणकारकाः
७१ पादांकितांमुंडपृष्ठांमहादेवीनिवासिनी तांदृष्ट्वासर्वलोकाश्चमुक्ताःपापोपपातकैः ७२ गयाशिरसिपुण्येचस-
र्वपापविवर्जिते प्रेतादिवर्जितंयस्मात्ततोनियावनंवरं ७३ कीकटेषुगयापुण्यापुण्यंराजगृहंवनं च्यवनस्याश्रमंपु-
ण्यंनदीपुण्यापुनःपुना ७४ वैकुंठोलोहदंडश्चगृध्रकूटोथशोनकः अत्रश्राद्धादिनासर्वान्पितॄन्ब्रह्मपुरंनयेत्
७५ क्रौंचरूपेणहिमुनिर्मुण्डपृष्ठेतपोकरोत् तस्यपादांकितोयस्मात्क्रौंचपादस्ततःस्मृतः ७६ स्नातोजलाशयेन-
त्रतर्पयेत्स्वर्गस्वकंकुलं वलिःकाकशिलायांचकाकमोक्षणमोक्षदः ७७ मुंडपृष्ठस्यससनौहिलोमशोमलोमहर्ष-
णः द्वावेतौपरमंतप्त्वातपःसिद्धिंपरांगतौ ७८ आहूयताःसरिच्छ्रेष्ठालोमशेनमहानदीः सरस्वतीवेत्रवतीचंद्रभा-
गासरस्वती ७९ कावेरीसिंधुवीराचचंद्रनाचसरिद्वरा वाग्मितीसरयुर्गंगायमुनागंडकीतथा ८० महानदीवैत-
रणीनिश्वीराचदिवौकसां ज्ञारव्यालकनंदाचउदीचीकनकाह्वया ८१ कौशिकीब्रह्मदाज्येष्ठासर्वाघौघविमो-
चिका कृष्णावेणीचर्मण्वतीनद्योमुक्तिप्रदायि ८२ आहूयतत्सरितःश्रेष्ठालोमशोलोमहर्षणः तपसस्तुप्रभावे

ग.मा.टक: १४ क्रौंचपादोक्षयवटः फल्गुतीर्थं मधुस्रवा घृतकुल्या मधुकुल्या देविकाच महानदी १५ वैतरिण्यादिना
१२ व्यक्तरूपेणादिगदाधरः विष्णोः पदं रुद्रपदं ब्रह्मणः पदमुत्तमं कश्यपस्य पदं दिव्यं होह सौयत्र निर्गतौ पंचाग्नी
नां पदान्यत्र इंद्रागस्त्यपदे वरे १७ रवेश्च कार्तिकेयस्य क्रौंचमातंगयोरपि हाधीचं चान्द्रगणेशेका एवं च पदमुत्त
मं १८ मुख्य लिंगानि सर्वाणि व्यक्ताव्यक्तात्मकान्यपि आद्यो गदाधरश्चक्र व्यक्तश्रीमान् गदाधरः गायत्री चैव।
सावित्री त्रिसंध्येयं सरस्वती १९ गयादित्यश्चोत्तरार्को दक्षिणार्कोपि नैमिषः श्वेतार्को गणनाथश्च वसवोष्टौ मु
नीश्वराः २० रुद्राश्चैकादश चाथ तथा सप्तर्षयोपरे सोमनाथश्च सिद्धेशः कपर्दीशो विनायकः २१ नारायणो म
हालक्ष्मी ब्रह्मा श्री पुरुषोत्तमः मार्कंडेयोथ कोटीशोप्यं गिरेशः —— पितामहः २२ जनार्दनो मंगला च पुंडरी।
काक्ष उत्तमः इत्यादि व्यक्तरूपेण स्थितश्चादिगदाधरः २३ ब्रह्मणा सह रुद्राद्यैः कारिते निश्चले सुरे तुष्टाव द्यं
गदापाणिं वेधा हर्षेण संवृतः ब्रह्मोवाच गदाधरं त्वपगतकालकल्मषं गयागतं गदितगुणं गुणातिगं गुहागतं शि
खर गौरगेह गगणार्चितं गदिनमहं नमामि २४ गदां बिभर्तीत्यसौ गदाधरः विशेषेण अपगतौ कालकल्मषौ एम
यस्मात् गयायां विद्यमानं गदिताः गुणाः यस्य असौ तं गदितगुणं गुणातिगं सत्त्वरजस्तमोगुणैः अतिक्रांता स्थिति १२

तस्रूपेणव्यक्ताव्यक्तात्मनास्थितः १ कथंगदासमुत्पन्नाययाप्यादिगदाधरः गदालोलंकथंचासीत्सर्वपापक्ष
यंकरं २ सनत्कुमारउवाच गदोनामासुरोह्यासीद्वज्राद्वज्रतरोदृढः प्रार्थितोब्रह्मणेप्रादात्स्वशरीरास्थिदुस्त्यजं ३
ब्रह्मोक्तोविश्वकर्मापिगदांचक्रेऽद्भुतांतदा तदस्थिवज्रनिष्पेक्ष्यांगदांस्वर्गेह्यधारयत् ४ हेतिरक्षोब्रह्मपुत्रस्तपसे
पेसुदारुणं दिव्यवर्षसहस्राणांशतंवायुमभक्षत ५ उन्मुखश्चोर्ध्ववाहुश्चपादांगुष्ठवरेणह एकेनतिष्ठन्नव्यग्रः
शीर्णपर्णानिलाशयः ६ ब्रह्मादींस्तपसातुष्टान्वरंवव्रेवरप्रदान् देवैर्दैत्यैश्चशस्त्रास्त्रैर्विविधैर्मनुजैरपि ७ ।
कृष्णेशानस्यचक्राद्यैरवध्यस्यांमहाबलः तथेत्युक्त्वांतर्हितास्तेहेतिर्देवानथाजयत् ८ इंद्रत्वमकरोद्धेतिर्भीता
ब्रह्महरादयः हरिंतेशरणंजग्मुरूचुर्हेतिंजहीतितान् ९ ऊचेहरिरवध्योयंहेतिर्देवासुरैःसुराः महास्त्रंमे
प्रयच्छध्वंहेतिहन्याहितेनतं १० इत्युक्तास्तेततोदेवाःगदांतांहरयेददुः दधारतांगदामाद्यांदेवैरुक्तोगदाधरः
११ गदयाहेतिमाहत्यदेवेभ्यस्त्रिदिवंददौ क्षालनार्थंगदायत्रलोलिताविष्णुनाभवत्तच्चभूवनद्गदालोलंती
र्थंपरमपावनं गदयादाववष्टभ्यगयासुरशिरःशिला १२ निश्चलार्थंस्थितायस्मात्तस्मादादिगदाधरः शिला राम
यांमुंडपृष्ठाद्रिःप्रभासोनगपर्वतः उद्यंतोगीतवादित्रोभस्मकूटोगिरिर्महान् गृध्रकूटोप्रेतकूटश्चादिपालोरवि

सुसंस्कृतवाग्भिः संस्तुतं २७ विदेहकं करणकलाविवर्जितं विजन्मकं दिनकरवेदिभूषितं गदाधरं ध्वनिमु
खवर्जितं परं नमाम्यहं सततमनादिमीश्वरं २७ विदेहकं पांचभौतिकदेहरहितं करणकलाविवर्जितं कार्यक
लाविवर्जितं विजन्मकं जननादिरहितं दिनकरवेदिभूषितं दिनकरः सूर्यस्तस्य वेदिमंडलं तत्र भूषितं ध्वनि
मुखवर्जितं वाक्यास्यस्पर्शउत्कृष्टं २८ मनोतिगं मतिगतिवर्जितं परं सदद्वयं श्रुतिशिरसि स्तुतं बुधैः चिदा।
त्मकं कलिगतकारणातिगं गदाधरं हृदयगतं नमामि तं २९ मनोतिगं अमनोगोचरं मतिगतिवर्जितं बुधैर
प्राप्तं सदद्वयं सद्रूपमेकं बुधैः श्रुतिशिरसि स्तुतं ज्ञानिभिः वेदांतवाक्ये स्थितं चिदात्मकं चित्स्वरूपं कलिग
तकरणातिगं कलिगतकारणानि कामक्रोधादीनि येषां तेषामप्राप्तं २९ सनत्कुमार उवाच देवैः सार्द्धं ब्रह्म
णैवं स्तुतस्त्वादिगदाधरः ऊचे वरान्वृणीष्वेवं स्वरब्रह्मा तमब्रवीत् ३० शिलायां देवरूपिण्यानतिष्ठामस्त्वया
विना संस्थास्यामो त्वया सार्द्धं नित्यव्यक्तादिरूपिणा ३१ एवमस्त्विति यासार्द्धं स्थितस्त्वादिगदाधरः लोकानां
रक्षणार्थाय जगतां मुक्तिहेतवे ३२ सुव्यक्तः पुंडरीकाक्षो जनार्द्दन इति श्रुतेः देवैरगम्या या मूर्तिरादिभूतासना।
तनी ३३ सुव्यक्तोश्वेतकल्पे तु भविष्यामि तथा पुनः वाराहकल्पे ह्यव्यक्तो देवो मप्यगमत्पुरा ३४ सतारणाय

यस्य गुहागतं हृद्गुहागतं। गिरिवरगौरगेहगं गिरिवरः कैलासस्तस्य गौरे शुद्धे गृहे वर्त्तमानं गणार्चितं देवग
णैरर्चितं गदास्यास्त्रीनिगदीतं २६ अहः श्रियं त्रिदशगणादिसुश्रियं भवश्रियं दितिभवदारुणश्रियं कलिश्रि
यं कलिमलमर्द्दनश्रियं गदाधरं नौमि नमाश्रितश्रियं॥ अहः श्रियं अहः श्रीर्यस्यात्रिदशागुणादिसुश्रियं त्रि
दशगुणादौ देवगुणादौ सुष्ठु श्रीर्यस्य भवश्रियं भवे संसारे श्रीर्यस्य। दितिभवदारुणश्रियं। दितिभवाः दैत्याः तेषु
दारुणा संहाररूपा श्रीर्यस्य कलिश्रियं। कलौ श्रीर्यस्य। कलियुगे यस्य स्मरणमात्रेण पापराशिनष्टो भवतीत्यर्थः।
कलिमलमर्द्दनश्रियं यस्य चरित्रश्रवणं कलौ मलानि पापानि तेषां प्रायश्चित्तरूपा श्रीर्यस्य आश्रितानां श्रीर्य
स्य प्रसादात् भवति एतादृशा २७ दृढादृढं परिदृढं गाढसंस्तुतं कामादृतं सुदृढमरूढिरूढिगं तमाढ्यगं दृढदु
रिताघढौकितं स्तव ढौकितं दृढनरगोत्रसूक्तिभिः॥ दृढात् दृढवज्रादपि दृढं परिदृढगाढसंस्तुतं परितो दृढाः ब्रह्म
रय: नैरस्यंतं स्तुतं कामादृतं कामादृतं कामेन मदनेन अदृतां अप्राप्तं सुदृढं अजरामरं अरूढिरूढिगं अप्र
कटतया सर्वपदार्थेषु संतं आढ्यगं आढ्येषु विभूत्या वर्तमानं दृढदुरिताघढौकितं वर्त्तमान पापिभिः प्राप्तं दृढ
नरगोत्रसूक्तिभिः चिरंजीविनो ये मार्कंडेयादयः गोत्रे मूलभूता ये वशिष्ठादयः ऋषयो ज्ञानिनः तेषां सूक्तिभिः।

ग.मा. एवमक्तोमहेशेनप्रीत्यासादिगदाधरः स्थितोदेवशिलायांचदेवैर्ब्रह्मादिभिःसुरैः ५० संस्थितंमुण्डपृष्ठाद्रौ
१४ देवमादिगदाधरः सर्वेतिपूजयन्तीहविष्णुलोकंव्रजंतिते ५१ धर्मार्थीप्राप्नुयाद्धर्ममर्थार्थीचार्थमाप्नुयात् कामा
नवाप्नुयात्कामीमोक्षार्थीमोक्षमाप्नुयात् वंध्याचलभतेपुत्रमभ्यर्च्यादिगदाधरं राजाविजयमाप्नोतिशूद्रःसुखम
वाप्नुयात् ५२ पुत्रार्थीलभतेपुत्रान्वेदवेदांगपारगान् मनसाप्रार्थितंसर्वंपूजाद्यैःप्राप्नुयाद्धरेः ५४ इतिश्रीवायु
पुराणेश्वेतवाराहकल्पेगयामाहात्म्येपंचमोध्यायः ५ ॥ सनत्कुमारउवाच गयायात्राप्रवक्ष्यामिशृणुनारदमुक्ति
दां निष्कृतिस्त्विहकर्तॄणांब्रह्मणागीयतेपुरा १ उद्यतश्चेद्गयांगंतुंश्राद्धंकृत्वाविधानतः विधायकार्पटीवेषं
कृत्वाग्राममप्रदक्षिणं २ ततोग्रामान्तरंगत्वाश्राद्धशेषान्नभोजनं ततःप्रतिदिनंगच्छेत्प्रतिग्रहविवर्जितः २ प्र
तिग्रहादुपावृत्तःसंतुष्टोनियतःशुचिः अहंकारनिवृत्तोयःसतीर्थफलमश्नुते ४ यस्यहस्तौचपादौचमनश्चा
पिसुसंयतं जितेन्द्रियोधर्मशीलःसतीर्थफलमश्नुते १ गृहाच्चलितमात्रेणगयायांगमनंप्रति स्वर्गारोहण
सोपानंपितॄणांचपदेपदे २ पदेपदेश्वमेधस्ययत्फलंगच्छतोगयां तत्फलंलभतेपुण्यंसमग्रंनात्रसंशयः राम
२ ततोगयांसमासाद्यब्रह्मचारीसमाहितः अश्वमेधमवाप्नोतिगमनादेवनारदः ४ ततोगयाप्रवेशेतुपूर्वतो १४

कुष्ठादिव्याधिनिर्मुक्ता यास्यंति हरिमंजसा। ये द्रक्ष्यंति सदा भक्त्या देवमादिगदाधरं त्रु॰ २॥
लोकानां देवानां रक्षणाय च गयाशिरसि सुव्यक्तो भविष्यति न संशयः ३५ ये द्रक्ष्यंति सदा भक्त्या देवमादिग।
दाधरं ते प्राप्स्यंति धनं धान्यं आयुरारोग्यमेव च ३६ कलत्रपुत्रपौत्रादि गुणकीर्तिसुखानि च श्रद्धया येन म।
स्यंति राज्यं ब्रह्मपुरं तथा ३७ भुक्त्वा व्रजेयुः सनतं पुण्यं पुण्यफलं नरः गंधादानेन गंधाढ्यः सौभाग्यं पुष्पदान
तः ३८ धूपदानेन राज्याप्तिर्दीपाद्दीप्तिर्भविष्यति ध्वजदानात्पापहानिर्यात्राकृत्ब्रह्मलोकभाक् ३९ श्राद्धादि
पिंडदानेन विष्णुनयंति वै पितॄन् श्राद्धदानेन ये देवमंत्रेणादिगदाधरं।४० स्नापयंति ये समभ्यर्च्य पितॄंस्तेष्यंति।
माधवं शिवोपि परयाप्रीत्या तुष्टाव आदिगदाधरं ४१ शिव उवाच अव्यक्तरूपो यो देवो मुंडपृष्ठादिरूपतः फल्गु
तीर्थादिरूपेण नमाम्यादिगदाधरं ४२ व्यक्तरूपो हि यो देवो जनार्दनस्वरूपतः मुंडपृष्ठे स्वयं व्यक्तस्तेन।४३ शि
लायां देवरूपिण्यां स्थितो ब्रह्मादिभिः सुरैः पूजितं संस्तुतं देवं न।४४ महदादेश्च जगतो व्यक्तस्यैकं हि कारणं अ
व्यक्तं ज्ञानरूपं तं न।४५ यं च दृष्ट्वा तथा स्पृष्ट्वा पूजयित्वा प्रणम्य तं श्राद्धाद्यैर्ब्रह्मलोकाप्तिर्न।४६ देहेंद्रियमनो
बुद्धिप्राणाहंकारवर्जितं जाग्रत्स्वप्नविनिर्मुक्तं न।४७ व्यक्ताव्यक्तस्वरूपेण पदरूपेण संस्थितं मुखादिलिं
गरूपेण न।४८ नित्यानित्यविनिर्मुक्तं सत्यमानंदमव्ययं तुरीयं ज्योतिरात्मानं न।४९ सनत्कुमार उवाच।

25

पाद्रक्षय्यपिंडकं तिलाज्यमधुदध्यादीन्पिंडद्रव्येषुयोजयेत् १९ संबंधिनस्तिलाद्भिश्चकुशेष्वावाहयेत्ततः आब्रह्म
स्तंबपर्यंतंदेवर्षिपितृमानवाः २० तृप्यंतुपितरःसर्वेमातृमातामहादयः अतीतकुलकोटीनांसप्तद्वीपनिवासिनां
२१ आब्रह्मभुवनाल्लोकानिदमस्तुतिलोदकं पितापितामहश्चैवतथैवप्रपितामहः २२ मातापितामहीचैवतथैवप्र
पितामही मातामहस्तत्पिताचप्रमातामहकादयः २३ तेषांपिंडोमयादत्तोह्यक्षय्यमुपतिष्ठतु मुष्टिमात्रप्रमाणंच
आर्द्रामलकमात्रकं २४ शमीपत्रप्रमाणेनपिंडंदद्याद्गयाशिरे उद्धरेत्सप्तगोत्राणांकुलमेकोत्तरंशतं २५ पितुर्मा
तुश्चभार्यायादुहितुर्भगिन्यास्तथा पितृष्वसुर्मातृभगिन्याःसप्तगोत्राःप्रकीर्तिताः २६ चतुर्विंशाश्चविंशाश्चषोडशाद्वा
दशैवहि रुद्रादशवसुश्चैवकुलान्येकोत्तरंशतं २७ अस्मत्कुलेमृतायेचगतिर्येषांनविद्यते आवाहयिष्येतान्स
र्वान्कुशपृष्ठेतिलोदकैः २८ मातामहकुलेयेचगतिर्येषांनविद्यते आवा० २९ बंधुवर्गकुलेयेचगतिर्येषांनवि
द्यते आवा०।३०।इत्येतैः ——— सजलैर्मंत्रैर्दर्भेषुध्यानवान्पितॄन् आवाह्याभ्यर्च्यतेभ्यश्चपिंडान्दद्यात्तुयथाक्रमं
३१ अस्मत्कुलेमृतायेचगतिर्येषांनविद्यते तेषामुद्धरणार्थायइमंपिंडंददाम्यहं ३२ मातामहकुलेयेचगतिर्येषां
नविद्यते तेषामुद्धमुद्धरणार्थाय० ३३ बंधुवर्गकुलेयेचगतिर्येषांनविद्यते तेषां०।३४ अजातदंतायेकेचित्येचग

स्तिमहानदी तत्रतोयंसमुत्पाद्यस्नातव्यंनिर्मलेजले ५ देवादींस्तर्पयित्वातुश्राद्धंकृत्वायथाविधिः स्ववेदशा
स्वागदितमर्घ्यावाहनवर्जितं ६ अपरेन्हिशुचिर्भूत्वागच्छेच्चप्रेतपर्वतं ब्रह्मकुंडेततःस्नात्वादेवादींस्तर्पयेत्सु।
धीः ७ कुर्याच्छ्राद्धंसपिंडानांप्रयतःप्रेतपर्वते प्राचीनावीतिनाभाव्यंदक्षिणाभिमुखःस्मरन् ८ कव्यवालोन।
लःसोमोयमश्चैवार्यमातथा अग्निष्वात्ताबर्हिषदःसोमपाःपितृदेवताः ९ आगच्छंतुमहाभागायुष्माभीरक्षिता
स्त्विह मदीयाःपितरोयेचकुलेजाताःसनाभयः १० तेषांपिंडप्रदानार्थमागतोस्मिगयामिमां तेसर्वेतृप्तिमायां
तुश्राद्धेनानेनशाश्वतीं ११ आचम्योत्क्षातुपंचाङ्गंप्राणायामंतुयत्नतः पुनरावृत्तिरहितब्रह्मलोकाप्तिहेतवे।
१२ एवंचविधिवच्छ्राद्धंकृत्वापूर्वंयथाक्रमं पितॄनावाह्यचाभ्यर्च्यमंत्रैःपिंडप्रदोभवेत् १३ तीर्थप्रेतशिलादौ
चचरुणासघृतेनच प्रक्षाल्यपर्वतस्थानेपंचगव्यैःपृथक्पृथक् १४ स्वमंत्रैरर्च्यसंपूज्यपदेचपददैवतं यावं
तिलामनुष्यैश्चगृहीताःपितृकर्मसु १५ गच्छंतिभीतास्त्वसुराःसिंहाद्दृष्ट्वायथामृगाः अष्टकासुचवृद्धौचगया
यांचमृतेहनि १६ मातुःश्राद्धंपृथक्कुर्यादन्यत्रपतिनासह वृद्धिश्राद्धंतुमात्रादिगयायांपितृपूर्वकं १७ पाद
मूर्वसमारम्यदक्षिणाग्रैःकुशैःक्रमात् पित्रादिनांसमास्तीर्यतेषांगृह्योक्तमाचरेत् १८ सक्तुनामुष्टिमात्रेणद।

ग.मा. वंशद्वयेस्मिन्ममदासभूता भृत्यास्तथैवाश्रितसेवकाश्च ५३ मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च स्पृष्टाश्च कृतोपकाराः
१६ जन्मांतरे येममसंगताश्च तेभ्यः स्वधापिंडमहंददामि ५४ एतांश्च सर्वमंत्रांश्चोलिंगांतानुसमूह्य च। पिंडंदद्यात्पूर्ववत्स्त्री
णांमात्रादिकानुक्रमात् ५५ स्वगोत्रे परगोत्रे च दंपत्योः पिंडदानतः अपृथक्तु निष्फलं श्राद्धं पिंडे वृद्धकातर्पणं ५६ पिंडपा
त्रेतिलानुक्त्वा पूरयित्वा शुभोदकैः परिषिच्य त्रिधा सव्यं प्राणिपत्य समापयेत् ५७ समापनमंत्रः॥ ये च वोत्र ये चास्मान्
नुशंसंते यांश्च वोन्ये याश्चास्माना शंसंते ते च वहंतां तांश्च वहंतां तृप्यंतु भवंतस्तृप्यंतु भवंतस्तृप्यत तृप्यत तृप्यत। पुत्रान्पौत्रान्
भिवर्द्धयंतो रापो मधुमतीरिमाः स्वधां पितृभ्यो अमृतं दुहाना आपो देवीरुभयांस्तर्पयंतु पितॄन्विसृज्य चाचम्य साक्षिणः श्राव
येत्सुरान् साक्षिणः संतु मे देवा ब्रह्मेशानादयस्तथा ५८ मया गयां समासाद्य पितॄणां निष्कृतिः कृता आगतोस्मि गयां देव पितृ
कार्ये गदाधरः ५९ त्वमेव साक्षी भगवन्ननृणोहमृणत्रयात् सर्वस्थानेषु चैवस्यात्पिंडदानं तु नारद ६० प्रेतपर्वतमास
द्य कुर्यात्तीर्थेषु च क्रमात् तिलमिश्रांस्ततः सक्तून्निक्षिपेत्प्रेतपर्वते ६१ अपसव्येन देवर्षे दक्षिणाभिमुखः क्रमात् ये केचित्
प्रेतरूपेण वर्तंते पितरो मम ६२ ते सर्वे तृप्तिमायांतु सक्तुभिस्तिलमिश्रितैः आब्रह्मस्तंबपर्यंतं यत्किंचित्सचराचरं ६३ म
याद्त्तेन तोयेन तृप्तिमायांतु सर्वशः प्रेतत्वाच्च विमुक्ताः स्युः पितरस्तस्य नारद ६४ प्रेतत्वं नस्य माहात्म्यात्कुले चापि न वि
द्यते नाम्ना प्रेतशिला ख्याता गयाशिरसि ६५ तीर्थमंत्रादिरूपेण स्थिता आदिगदाधरः ६६ इति श्रीवायुपुराणे श्वेतवा १६

असिपत्रवनेघोरेकुंभीपाकेचयेगताः तेषांमु·४१॥ तु·४॥
र्भप्रपीडिताः तेषुमु०।३५ अग्निदग्धाश्चयेकेचितूनाग्निदग्धास्तथापरे विद्युच्चौरहतायेचतेभ्यः०३६ दावदाहे
मृतायेचसिंहव्याघ्रहताश्चये दंष्ट्रिभिःशृंगिभिर्वापितेभ्यः०३७ उद्बंधनमृतायेचविषशस्त्रहताश्चये आत्मनोघा
तिनोयेचतेभ्यः०।३८ अरण्येवर्त्मनिरणेक्षुधयातृषयाहताः भूतप्रेतपिशाचाश्चतेभ्यः०।३९ रौरवेचांधतामिस्रेका
लसूत्रेचयेगताः तेषांमु०।४० अनेकयातनासंस्थाप्रेतलोकंचयेगताः तेषांमु०।४१ असंख्ययातनासंस्थाये
नीतायमशासनैः तेषांमु०।४२ नरकेषुसमस्तेषुयातनायांचसंस्थिताः तेषांमु०४३ पशुयोनिगतायेचपक्षि
कीटसरीसृपा अथवावृक्षयोनिस्थाःतेभ्यः०४४ जात्यंतरसहस्रेषुभ्रमंतःस्वेनकर्मणा मानुष्यंदुर्लभंयेषांते
भ्यः०४५ दिव्यंतरिक्षभूमिष्ठाःपितरोबांधवादयः मृताअसंस्कृतायेचतेभ्यः०।४६ येकेचित्प्रेतरूपेणवर्तंते
पितरोमम तेसर्वेतृप्तिमायांतुपिंडेनानेनशाश्वतीं ४७ येबांधवाबांधवावाये[illegible]जन्मनिबांधवाः तेषांपिंडोमया
दत्तोह्यक्षय्यमुपतिष्ठतु ४८ पितृवंशेमृताश्चैवमातृवंशेतथैवच गुरुश्वशुरबंधूनांयेचान्येबांधवादयः ४९
येमेकुलेलुप्तपिंडाःपुत्रदारैर्विवर्जिताः क्रियालोपगतायेचजात्यंधाःपंगवस्तथा ५० विरूपाआमगर्भाश्चज्ञा
ताःज्ञाताकुलेमम धर्मपिंडोमयादत्तोह्यक्षय्यमु०५१ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः

ष्वखिलेष्वपि १५ नानिस्नातुंसमायांतिफल्गुतीर्थेसुरैःसह गंगापादोदकीविष्णोःफल्गुःह्यादिगदाधरः १६ स्वयं
हिद्रवरूपेणतस्माद्गंगाधिकंविदुः अश्वमेधसहस्राणांसहस्रंयःसमाचरेत् १७ नासौतत्फलमाप्नोतिफल्गुतीर्थेय
दाप्नुयात् फल्गुतीर्थेविष्णुजलेकरोमिस्नानमादृतः १८ पितॄणांविष्णुलोकायभुक्तिमुक्तिप्रसिद्धये फल्गुतीर्थेनरः।
स्नात्वातर्पणंश्राद्धमाचरेत् १९ सपिंडकंस्वसूत्रोक्तंनमेदथपितामहं नमःशिवायदेवायईशानपुरुषायच २० अघोरवा
मदेवायसद्योजातायशंभवे फल्गुतीर्थेनरःस्नात्वादृष्ट्वादेवंगदाधरं २१ आत्मा
नंतारयेत्सद्योदशपूर्वान्दशापरान् नत्वागदाधरंदेवंमंत्रेणानेनपूजयेत् २२ ॐनमोवासुदेवायनमःसंकर्षणायच
प्रद्युम्नायानिरुद्धायश्रीधरायचविष्णवे २२ पंचतीर्थ्यांनरःस्नात्वाब्रह्मलोकंनयेत्पितॄन् अमृतैःपंचभिःस्नानंपुष्पव
स्नाद्यलंकृतं २३ नकुर्याद्योगदापाणिंतस्यश्राद्धमपार्थकं नागकूटाद्गृध्रकूटाद्यूपाचोत्तरमानसात् २४ एतद्ग
याशिरःप्रोक्तंफल्गुतीर्थंतदुच्यते मुंडपृष्ठनगाधस्तात्फल्गुतीर्थमनुत्तमं २५ तत्रश्राद्धादिनास वैपितरोमोक्षमा
प्नुयुः मुखगयासुरस्यैततस्माच्छ्राद्धमथाक्षयं २६ प्रथमेन्हिविधिःप्रोक्तोद्वितीयेदिवसेव्रजेत् धर्मारण्यंतत्रधर्मा। राम
र्मेतस्माद्यज्ञमकारयत् गमतांब्रह्मलोकाप्तिर्भवत्येवहिनारद मतंगवाप्यांस्नात्वातर्पणंश्राद्धमाचरेत् गत्वा। १७

गरुडकल्पे गयामाहात्म्ये षष्ठोऽध्यायः ६ सनत्कुमार उवाच आदौ तु पंचतीर्थेषु चोत्तरे मानसे विधिः आचम्य कुशहस्तेन शिर
आभ्युक्ष्य वारिणा १ उत्तरे मानसे गच्छन्मंत्रेण स्नानमाचरेत् उत्तरे मानसे स्नानं करोम्यात्मविशुद्धये २ सूर्यलोकादिसंसिद्धि
सिद्धये पितृमुक्तये स्नात्वाथ तर्पणं कृत्वा श्राद्धं कृत्वा सपिंडकं ३ मानसं हि सरो यस्मात्तस्मादुत्तरमानसं सूर्यं नत्वार्चयित्वाथ
सूर्यलोकं नयेत्पितॄन् ४ ॐ नमो भानवे भर्त्रे सोमभौमज्ञरूपिणे जीवभार्गवशनैश्चरराहुकेतुस्वरूपिणे ५ उत्तरात्मानसा
न्मौनी व्रजेद्दक्षिणमानसं दक्षिणे मानसे चैव तीर्थत्रयमुदाहृतं ६ स्नात्वा तेषु विधानेन कुर्याच्छ्राद्धं पृथक् पृथक् उदीचती
र्थमित्युक्तं तत्रोदीच्यां विमुक्तिदं ७ अत्र स्नातो दिवं याति स्वशरीरेण मानवः मध्ये कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् ८ स्ना
त्वा कनकवद्भान्ति नरा यान्ति पवित्रतां तस्य दक्षिणभागे च तीर्थं दक्षिणमानसं ९ दक्षिणे मानसे स्नानं करोम्यात्मविशुद्धये
सूर्यलोकादिसंसिद्धिसिद्धये पितृमुक्तये १० ब्रह्महत्यादिपापौघघातनाय विमुक्तये दिवाकर करोमीह स्नानं दक्षिणमान
से ११ सूर्यं नत्वा च स्मृत्वा च सूर्यलोकं नयेत्पितॄन् नमामि सूर्यं तृप्त्यर्थं पितॄणां तारणाय वै १२ पुत्रपौत्रधनैश्वर्यआयुरोग्य
वृद्धये अनेन स्नानपूजादि कुर्याच्छ्राद्धमनुत्तमं १३ कृत्वा नत्वा च मौनार्कमिमं मंत्रमुदीरयेत् फल्गुतीर्थे व्रतेन स्नात्वा
वै तीर्थोत्तमोत्तमे १४ मुक्तिर्भवति पितॄणां कर्तॄणां तारणाय च ब्रह्मणा प्रार्थितो विष्णुः फल्गुरूपो भवत्पुरा १५ दक्षिणा
ग्निहुतं नूनं तज्जलं फल्गुतीर्थकं तीर्थानि यानि सर्वाणि भुवने-

ग॰मा॰ विष्णुरूपंप्रसिंचामिपितॄणांमुक्तिहेतवे एकोमुनिःकुंभकुशाग्रहस्तो आम्रस्यमूलेसलिलंददानः आम्राश्चसि
१८ क्ताःपितरश्चतृप्ताएकाक्रियाह्यर्थकरीप्रसिद्धा ४१ ततोयमबलिंक्षिप्त्वामंत्रेणानेनसंयुतः यमराजधर्मराजौ
निश्चलार्थेव्यवस्थितौ ४२ ताभ्यांबलिंप्रदास्यामिपितॄणांमुक्तिहेतवे ततःश्वानबलिंक्षिप्त्वामंत्रेणानेनसंयुतः।
४२ श्वानौद्वौश्यामशबलौवैवस्वतकुलोद्भवौ ताभ्यांबलिंप्रदास्यामिरक्षेतांपथिसर्वदा ४३ ततःकाकबलिंक्षि
प्त्वापुनःस्नानंसमाचरेत् ऐंद्रवारुणवायव्यायाम्यावैनैर्ऋतास्तथा ४४ वायसाःप्रतिगृह्णंतुभूम्यांपिंडंमयोज्झि
तं फल्गुतीर्थेचतुर्थेह्निस्नानादिकंसमाचरेत् ४५ गयाशिरस्ययच्छ्राद्धंपदेकुर्यात्सपिंडकं साक्षाद्गयाशिरस्तत्र
फल्गुतीर्थाश्रितंकृतं ४६ नगाज्जनार्दनात्ब्रह्मकूपादुत्तरमानसात् एतद्गयाशिरःप्रोक्तंफल्गुतीर्थंतदुच्यते ४७
पितामहंसमासाद्ययावदुत्तरमानसात् फल्गुतीर्थंतुविज्ञेयंदेवानामपिदुर्लभं ४८ क्रौंचपादात्फल्गुतीर्थंयाव
त्साक्षाद्गयाशिरः मुखंगयासुरस्यैवतस्माच्छ्राद्धमथाक्षयं ४९ मुंडपृष्ठान्नगाधस्तात्साक्षात्फल्गुतीर्थकं आ
द्योगदाधरोदेवोव्यक्ताव्यक्तोव्यवस्थितः ५० विष्ण्वादिपदरूपेणपितॄणांमुक्तिहेतवे तत्रविष्णुपदंदिव्यंदर्शनं। राम
पापनाशनं ५१ स्पर्शनंपूजनंचैवपितॄणांदत्तमक्षयं श्राद्धंसपिंडकंकृत्वाकुलसाहस्रमात्मनः ५२ नयेद्विष्णु १८

नत्वामतंगेघ्रा मिमंमंत्रमुदीरयेत् २७ प्रमाणंदेवताःसंतुलोकपालाश्चसाक्षिणः मयागत्यमतंगेस्मिन्पितॄणां
निष्कृतिःकृता २८ यत्कूपयूपयोर्मध्येसर्वांस्तारयतेपितॄन् धर्मंधर्मेश्वरंनत्वामहाबोधितरुंनमेत् २९ नमस्तेश्व घि२
त्थराजायब्रह्मविष्णुमहेश्वरः बोधिद्रुमायपितॄणांकर्तॄणांतारणायच ३० एकादशोसिरुद्राणांवसूनामष्टमो॥
वसुः नारायणोसिदेवानांवृक्षराजोसिपिप्पल अश्वत्थरूपिणंदेवंशंखचक्रगदाधरं नमामिपुंडरीकाक्षंशंख
रूपधरंहरिं येऽस्मत्कुलेमातृवंशेबांधवादुर्गतिंगताः त्वद्दर्शनात्स्पर्शनाच्चस्वर्गतिंयांतितेऽक्षये ३१ ऋणत्रयमा।
यादत्तंगयामागत्यवृक्षराट् त्वत्प्रसादान्महापापाद्विमुक्तोहंभवार्णवात् ३२ ततोयंब्रह्मशिरसिस्नात्वाश्राद्धंसपिंड
कं कृत्वासर्वंप्रमाणेनमंत्रेणविधिवत्सुतः ३३ स्नानंकरोमितीर्थेस्मिन्ऋणत्रयविमुक्तये श्राद्धायपिंडदानायतर्प
णायविशुद्धये ३४ तत्कूपयूपयोर्मध्येब्रह्मलोकंनयेत्पितॄन् गयांकृत्वाछिन्नोयूपोब्रह्मणायूपद्दत्यपि ३५ कृत्वाब्र
ह्मसरःश्राद्धंसर्वांस्तारयतेपितॄन् यूपंप्रदक्षिणीकृत्यवाजपेयफलंलभेत् ३६ ब्रह्माणंचनमस्कृत्यब्रह्मलोकंन
येत्पितॄन् ॐनमोब्राह्मणेजायजगज्जन्माधिकारिणे ३७ भक्तानांचपितॄणांतारणायनमोनमः गोप्रचारसमीपे चर
स्थाआम्राब्रह्मप्रकल्पिता ३८ तेषांसिंचनमात्रेणपितरोमोक्षगामिनः आम्रंब्रह्मसरोद्भूतंसर्वदेवमयंतरुं ३९।

ग.मा. हिकस्मायपिंडकं भारद्वाजस्ततःपिंडंदातुंकश्यपायचोद्यतः ६७ अथैनोदृश्योऽब्रवीत्तत्रपुत्रस्त्वंहिममौरसः कस्मो
१९ ब्रवीन्ममक्षेत्रंततोमेदेहिपिंडकं ६८ श्रुत्वोऽब्रवीत्सौरिणीयंपुत्रस्त्वंहिममौरसः सौरिण्यथाब्रवीद्वाक्यंक्षेत्रिणे
वीर्यिणेततः भारद्वाजस्ततःपिंडंकश्यपस्यपदेददौ ६९ हंसयुक्तविमानेनब्रह्मलोकमुभौगतौ रामोरुद्रपदे
श्राद्धेपिंडदानायचोद्यतः ७० पितादशरथःस्वर्गेप्रसार्यकरमागतः नादात्पिंडंकरेरामोददौरुद्रपदेततः ७१
शास्त्रार्थातिक्रमाज्ज्ञातोरामंदशरथोऽब्रवीत् तारितोऽहंत्वयापुत्ररुद्रलोकमवाप्नुयां ७२ हस्तेपिंडप्रदानेनस्वर्ग
तिर्नहिमेभवेत् त्वंचराज्यंचिरंकृत्वापालयित्वाद्विजान्प्रजाः ७३ यज्ञान्सदक्षिणान्कृत्वाविष्णुलोकंप्रजिष्यसि पुर्या
योध्याजनैःसार्द्धंपक्षिकीटादिभिःसह ७४ इत्युक्त्वासोदशरथःरुद्रलोकंपरंययौ भीष्मोविष्णुपदेदिव्येआजुहाव
स्वकान्पितॄन् ७५ आहूतत्वाद्यतोदातुंपित्रादिभ्यश्चपिंडकं पितुर्विनिर्गतोहस्तोगयाशिरसिसंततोः ७६ नादा
त्पिंडंकरेभीष्मोददौविष्णुपदेततः शांतनुःप्राहसंतुष्टःशास्त्रार्थेनिश्चलोभवः ७७ त्रिकालदृष्टिर्भवतुअंतेविष्णु
श्चतेगतिः स्वेच्छयामरणंचास्तुइत्युक्त्वामुक्तिमागतः ७८ कनकेशंचकेदारंनरसिंहंचवामनं रथमार्गंसमभ्यर्च्य राम.
पितॄन्सर्वांस्तारयेत् ७९ गयाशिरसि यःपिंडान्येषांनाम्नातुनिर्वपेत् नरकस्थादिवंयांतिस्वर्गस्थामोक्ष १९

पदं दिव्यमनंतं शिवमव्ययं श्राद्धं कृत्वा रुद्रपदे नयेत्कुलशतं नरः ५३ सहात्मानं शिवपुरं तथा ब्रह्मपदे नरः ब्रह्म
लोकं कुलशतं समुद्धृत्य नयेत्पितॄन् ५४ दक्षिणाग्निपदे श्राद्धं वाजपेयफलं लभेत् गार्हपत्यपदे श्राद्धी राजसूय
फलं लभेत् ५५ श्राद्धं कृत्वाऽहवनीयपदेऽश्वमेधफलं लभेत् श्राद्धं कृत्वा सभ्यपदे ज्योतिष्टोमफलं लभेत् ५६ ॥
आवसथ्यपदे श्राद्धी सोमलोकं नयेत्पितॄन् श्राद्धं कृत्वा शक्रपदे इंद्रलोकमवाप्नुयात् ५७ अगस्त्यस्य पदे श्राद्धी पितॄन्
ब्रह्मपुरं नयेत् क्रौंचमातंगयोः श्राद्धी ब्रह्मलोकं नयेत्पितॄन् श्राद्धी सूर्यपदे पंचपापिनोऽर्कपुरं नयेत् कार्तिकेयप
दे श्राद्धी शिवलोकं नयेत्पितॄन् ५९ गणेशस्य पदे श्राद्धी रुद्रलोकं नयेत्पितॄन् गजकर्णिकायां तर्पणकृन्निर्मलं
स्व नयेत्पितॄन् ६० अन्येषां च पदे श्राद्धी पितॄन् ब्रह्मपुरं नयेत् सर्वेषां काश्यपं श्रेष्ठं विष्णो रुद्रस्य वा पदं ६१ ब्रह्म
णोऽपि पदं श्रेष्ठं सर्वेषां तत्र कीर्तितं । प्रारंभे परिसमाप्तौ च तेषां मन्यतमं स्मृतं ६२ श्रेयस्करं भवेत्तत्र श्राद्धकर्तुश्च नार
द कश्यपस्य पदे दिव्ये भारद्वाजो मुनिः पुरा ६३ श्राद्धं कृत्वोद्यतो दातुं पितृभ्यश्च पिंडकं कृष्णशुक्लौ ततो हस्तौ प
दमुद्भिद्य निर्गतौ ६४ दृष्ट्वा हस्तद्वयं तत्र मुनिः संशयमागतः ततः स्वमातरं शांतां भारद्वाजश्च पृष्टवान् ६५ कश्यप
स्य पदे दिव्ये कृष्णशुक्लौ यथा करे पिंडो देयो मया मातर्ज्ञो नाशि पितरं वद ६६ शांता उवाच भारद्वाज महाप्राज्ञ दे

ग.मा. योभवंतंचवंदेश्रीप्रपितामहं १५ इतिश्रीवायुपुराणेश्वेतवाराहकल्पेगयामाहात्म्येसप्तमोध्यायः ७ सनत्कुमारउ
२० वाच यज्ञंचक्रेगयोराजावह्वन्नंवहुदक्षिणं यत्रद्रव्यसमूहानांसंख्याकर्तुंनशक्यते स्थितागयायामन्नानांपर्वताः
पंचविंशतिः १ शिकतानांवायथालोकेयथाचदिवितारकाः तथावहुसुवर्णाद्यैरसंख्याताःसुदक्षिणाः २ नैवेहकेचिदि
हनकरिष्यंतितथापरे भविष्यंतिद्विजास्तस्तादेशेदेशेसुपूजिताः ३ गयंविस्मादयस्तस्तावरंब्रूहीतिचाब्रुवन् गया
स्तान्प्रार्थयामासविप्रान्प्रत्साश्चयेपुरा ४ ब्रह्मणानेद्विजापूताः भवंतुक्रतुपूजिताः गयाख्याद्वविधानायद्विजाःपूतोष्ट
तुर्दश ५ तेषांवाक्यंप्रकुर्वीतयदिब्रह्मास्वयंभवेत् गोतमंकाश्यपंकौत्संकौशिकंकण्वमेवच ६ भारद्वाजंद्वौ
शनसंवात्स्यंपाराशरंतथा सनत्कुमारंमांडव्यंलौकाक्षिंलोमशंमहत् ७ वाशिष्टंचतथात्रेयगोत्राण्येषांचतुर्द
श गयापुरीतिमन्नामाख्याताब्रह्मपुरंतथा ८ एवंमत्सुवरंदत्वानथोचांतर्दधेसुराः गयाख्यभोगान्संभुज्यविष्णु
लोकंपरंययौ ९ विशालायांविशालोभूद्राजपुत्रोब्रवीद्विजान् कथंपुत्रादयोमेस्युविशालंचाब्रुवन्द्विजाः १० ग
यायांपिंडदानेनतवसर्वंभविष्यति विशालोपिगयाशीर्षेपिंडदःपुत्रवानभूत् ११ दृष्ट्वाकाशेसितंरक्तंकृष्णंपुरुष राम
मब्रवीत् केयूयंतेषुचैवैकःसितःप्राचेविशालकं १२ अहंसितस्तेजनकइंद्रलोकादिहागतः ममपुत्रपितार २०

माप्नुयुः ८० गयाशिरसियःपिंडंशमीपत्रप्रमाणतः कंदमूलफलाद्यैर्वादद्यात्स्वर्गंनयेत्पितॄन् पदानिपत्रदृश्यंते
विष्ण्वादीनांतदग्रतः श्राद्धंकृत्वातेषुपिंडान्तेषांलोकंनयेत्पितॄन् ८२ सर्वत्रमुंडपृष्ठाद्रिपादैरेभिःसुलक्षितः प्र
यांतिपितरःसर्वेब्रह्मलोकमनामयं ८३ पंचमेन्हिगदालोलेस्नानंकृत्वासपिंडकं श्राद्धंपितॄन्ब्रह्मलोकंनयेद्दा।
त्मानमेवच ८४ गदालोलमितिख्यातंसर्वेषामुत्तमोत्तमं हेत्यासुरस्यचच्छिरंगदयाद्विधाकृतं ८५ यतःप्रक्षालिता
तीर्थेगदालोलंततःस्मृतं गदालोलेमहातीर्थेगदाप्रक्षालनेवरे ८६ स्नानंकरोमिशुध्यर्थमक्षय्यायस्वराप्तये ब्रह्मप्र
कल्पितान्विप्रान्भोजयेत्तोषयेत्ततः ८७ तैस्तुष्टैस्तोषिताःसर्वाःपितृभिःसहदेवताः कृतेश्राद्धेक्षयवटेअन्नेनैवप्र
यत्नतः दृष्ट्वानत्वाचसंपूज्यवटेशंचसमाहितः ८८ पितॄन्नयेत्ब्रह्मलोकमक्षय्यंचसनातनं वटवृक्षसमीपेचः।
शाकेनाप्युदकेनवा ८९ एकस्मिन्भोजितेविप्रेकोटिर्भवतिभोजिता गयायांधर्मपृष्ठेचशिरसिब्रह्मणस्तथा गया।
शीर्षेवटेचैवपितॄणांदत्तमक्षयं देयंदानंषोडशाकंगयातीर्थपुरोधसे ९० वस्त्रगंधादिभिःसम्यक्संपूज्यचप्रय।
त्नतः एकार्णवेवटस्याग्रेयःशेतेयोगनिद्रया ९१ बालरूपधरस्तस्मैनमस्तेयोगशायिने संसारवृक्षशस्त्रायाशे
षपापहरायच ९२ अक्षय्यब्रह्मदात्रेचनमोक्षय्यवटायवै कल्पासहेश्वरालोकाःयेनतस्माद्धृताधरः ९३ लिंगरू

ग॰मा॰ त्रिकाम्यथा प्राचीसरस्वतीतीर्थेस्नात्वाचापियथाविधि २८ संध्यामुपास्यसायान्हेविष्णुलोकंनयेत्पितॄन् बहुजन्म
२१ कृतात्संध्यालोपान्मुक्तस्त्रिसंध्यकात् २९ विशालायांलेलिहानतीर्थेचभरताश्रमे पादांकितेमुंडपृष्ठेगदाधा
रसमीपतः ३० तीर्थेचकाशगंगायांगिरिकर्णमुखेषुच स्नातोथपिंडप्रदोब्रह्मलोकंकुलशतंनयेत् ३१ देवनद्यां
वैतरिण्यांस्नातःस्वर्गंनयेत्पितॄन् स्नातोगोदावरीतीरेत्रिःसप्तकुलमुद्धरेत् ३२ सत्यंसत्यंपुनःसत्यंवैतरण्यां
तुनारद एकविंशतिकुलान्याशुतारयेन्नात्रसंशयः ३३ यमद्वारेमहाघोरेयासावैतरणीनदी तामहंतर्तुमिच्छामि
२५ मिकृष्णांगांप्रददाम्यहं ३४ अशक्तोयदिवाशक्तोगांप्रदद्याद्द्विजातये यासावैतरणीनामनदीत्रैलोक्यविश्रुता
सावतीर्णामहाभागापितॄणांतारणायच ३५ त्रिरात्रोपोषणेनैवतीर्थाभिगमनेनच अदत्वाकांचनंगाश्चदरि
द्रोजायतेनरः ३६ घृतकुल्यामधुकुल्यादेविकाचमहानदी शिलायांसंगमोयत्रतीर्थेयत्रमधुस्रवा ३७ अयुतं
चाश्वमेधानांस्नानकृल्लभ्यतेनरः श्राद्धंसपिंडकंकृत्वापिंडदानंतथैवच ३८ कुलानांशतमुद्धृत्यविष्णुलोकं
नयेत्पितॄन् दशाश्वमेधिकेहंसेतीर्थेचामरकंटके ३९ कोटितीर्थेरुक्मिणीकुंडेपिंडदःस्वर्नयेत्पितॄन् वैतरि राम
ण्यांघृतकुल्यांमधुकुल्यांतथैवच ४० कोटितीर्थेनरःस्नात्वादृष्ट्वाकोटीश्वरंचयत् कोटिजन्मभवेद्धिसाधना २१

कोब्रह्महापापकृत्तमः १३ अयंपितामहः कृष्णः कस्य योयेन[illegible]नितः आवीचिनरकंप्राप्तोमुक्तोत्वत्पिंडदानतः १४
मुक्तिःकृतात्वयापुत्रब्रजामःस्वर्गमव्ययं तातंपितामहंचैवतथैवप्रपितामहम् १५ मोक्षयामीतियत्नोयंत्वयादत्त।
मरिंदम तेनास्मद्युगपद्योगोजातोवाक्येनसत्तम १६ एवंपुत्रैःपितॄणांचकर्तव्यामुक्तिरुत्तमा त्वंचराज्यंचिरंकृत्वा
भुक्त्वाभोगान्सुदुर्लभान् १७ यज्ञान्सदक्षिणान्कृत्वाअंतेविष्णुपुरंव्रज तत्रभोगैःसुतृप्तःस्त्वमंतेमोक्षमवाप्स्य
सि एवंलब्धवरोराजाराज्यंभुक्त्वादिवंगतः १८ प्रेतराजसहप्रेतैर्गयाश्राद्धाद्दिवंगतः प्रेतःकश्चित्स्वमुक्त्यर्थं।
वणिजंकंचिदब्रवीत् १९ ममनाम्नागयाशीर्षेपिंडनिर्वापणंकुरु प्रेतभावविमुक्त्यर्थंत्वंगृहस्थंधनंमम २० तद्
नंसर्वमादायगयायज्ञेव्ययंकुरु षोडशांपंचभागाश्चतुभ्यंवैदत्तवानहं २१ स्वनामानियथान्यायंसंम्प्रगाख्यान्
वानरहः गत्वावणिक्गयाशीर्षेप्रेतराजायपिंडकं २२ प्रददौमनुजैःसार्द्धंस्वपितृभ्यस्ततोददौ प्रेताःप्रेतत्वनिर्मु
क्ताःवणिक्स्वगृहमागतः २३ एवंगयस्यशंभोश्चक्षेत्रेविष्णोःस्वयंभुवः उपाधिर्तोचगायत्रीतीर्थेमहानदीस्थि
ते २४ गायत्र्यापुरतःस्नात्वाप्रातःसंध्यामुपासयेत् श्राद्धंसपिंडकंयेषांनयेत्ब्रह्मण्यतांकुलं २५ तीर्थेसा।
मुद्धितेस्नात्वासावित्र्याःपुरतोनरः संध्यामुपास्यमध्याह्नेनयेत्कुलमनंतदिवं २६ पिंडदानंततःकुर्यात्पितॄणांमु।

५५ स्वर्गंव्रजशरीरेणभ्रातृभिःपार्श्वगैःसह दृष्टिमात्रेणसंपूतान्नरकस्थान्दिवंनय ५६ इत्युक्त्वाप्रययौपांडुःप्राप्य
तंपदमव्ययं मतंगस्यपदेश्राद्धीब्रह्मलोकंनयेत्पितॄन् ५७ निमेष्याभिंघ्रामीगभीवर्षिविष्ण्वादिभिःसह लभेनी
र्थंतुयत्रार्थेत्रिषुलोकेषुविश्रुतं ५८ भरतसंज्ञंचनतीर्थंपितॄणांमुक्तिदायकं पितृत्वगीलयनत्वासंगमेगार
केश्वरी गयाकूपेपिंडदानादश्वमेधफलंलभेत् ५९ भस्मकूटेभस्मनाथःस्नात्वातारयतेपितॄन् सत्वापापंभवे
न्मुक्तः संगमेस्नानमाचरेत् ६० धौतपादेथनिःक्षीरासंगमेस्नानकृन्नरः श्राद्धीरामपुष्करिण्यांब्रह्मलोकंन
येत्पितॄन् ६१ सुषुम्नांचमहाकुल्यांत्रिःसप्तकुलमुद्धरेत् स्नानेनत्वावशिष्ठेशंतीर्थेचाश्वमेधभाक् दृष्टिं
चक्रेऽश्वमेधारण्यवशिष्ठोमुनिसत्तमः ६२ दृष्टितोनिर्गतःशंभुःवरंवृणुवशिष्ठक आहेतितंवशिष्ठोपिशिवत्तु
ष्टोस्मियदि ६३ वास्तव्यंचात्रदेवेशचतथेत्युक्त्वाशिवःस्थितः पिंडदोधेनुकारण्येकामधेनुपदेषुच ६४॥
स्नात्वाश्राद्धार्थेसंपूज्यब्रह्मलोकंनयेत्पितॄन् कर्दमालयेगयानाभौमुंडपृष्ठसमीपतः ६५ स्नात्वाश्राद्धादि
कंकृत्वापितॄणामनृणोभवेत् फल्गुचंडीश्मशानाक्षीमंगलाद्याःसमर्चयेत् ६६ गयायांचवृषोत्सर्गात्त्रिःस
प्तकुलमुद्धरेत् यत्रतत्रास्थितादेवाऋषयोपिजितेन्द्रियाः ६७ गयोगजोगयादित्योगायत्रीचगदाधरः गया

ढोवेदपारगः ५१ मार्कंडेयेश कोटीशो नत्वास्यात्पितृतारकः रुक्मपारिजातकवने पार्वत्या सह शंकरः ५२ रह
स्ये संस्थितो रम्ये वर्षाणामयुतं पुरा मरीचिः फलपुष्पार्थं पारिजातकवनं गतः ५३ दृष्टा शप्तो महेशेन यस्मात्सुष
विघातकः दुःखी भवेति तच्छ्रुत्वा मरीचिस्तुष्टुवे शिवं ५४ तुष्टः प्रोवाच तं शंभुः वृणीष्व वरमुत्तमं शापाद्भवतु मुक्ति।
मे मरीचिः प्राह शंकरं ५५ भवेद्गयायां मुक्तिस्ते शिवोक्तः प्रययौ गयां शिलास्थितस्तपस्तेपे सर्वे पांडुष्करं च यत्।
५६ मरीचिरीक्षयाच्छन्नः कृष्णत्वमगमत्पुरा तपसा दारुणेनेह सोपि शुक्लत्वमागतः ५७ हरिरुद्रैर्मरीचिं च व
रं वृणुहि पुत्रक किं त्वन्यत्त्वयि तुष्टे मे मरीचिः प्राह माधवं ५८ हरशापाद्विमुक्तोहं शिला भवतु पावनी पितृमुक्ति
करी साक्षात्तथेत्युक्त्वा दिवं ययौ ५९ देवीकसां पुष्करिणीं समासाद्य नरः शुचिः यत्र दत्तं पितृभ्यश्च भवत्यक्षय।
मित्युत ५० तत्र स्नातो दिवं याति सशरीरेण मानवः पाप्मानं प्रजहात्येष जीर्णत्वंचमिवोरगः ५१ तत्र कंजवरं
एयं पुण्यात्कल्हि निषेवितं पांडुशिला वै सा प्रोक्ता श्राद्धं यत्राक्षयं भवेत् ५२ युधिष्ठिरस्तु तस्यां हि श्राद्धं कर्तुं य
यो मुने तत्र काले पांडुनोक्तं मह्यं तं देहि पिंडकं ५३ हस्तं त्यक्त्वा शिलायां च पिंडदानं चकार सः शिलायां पिंड
दानेन प्रहृष्टो व्यासनंदनः ५४ वरं पुत्राय प्रददौ राज्यं कुरु महीतले अकंटकं तु संपूर्णं त्वमेवानाहि पुत्रक।

भारतपूर्णं वेदव्यासं संपूर्णम्

23

गयशिरश्चैव षड्या मुक्तिदायकाः ६८ आदौ गदाधरं ध्यात्वा श्राद्धं पिंडादिकं नरः कुलानां शतमुद्धृत्य ब्रह्मलो
कं नयेत्पितॄन् ६९ गयाख्यानमिदं पुण्यं यः पठेत्सततं नरः शृणुयाच्छ्रद्धया यस्तु स याति परमां गतिं ७० श्रीमद्ग
यायामाहात्म्यं शृणुयाद्यस्तु भक्तितः विधिना व्यासपुरुषं वित्तशाठ्यं न कारयेत् ७१ गोभूहिरण्यदानानि वस्त्रा
लंकरणानि च संपूज्य व्यासपुरुषं भुक्तिमुक्तिप्रदायकं ७२ पाठयेद्वा गयाख्यानं विप्रेभ्यः पुण्यकृन्नरः शृणु।
श्राद्धकृतं तेन दत्तं तेन सुनिश्चितं ७३ गयायामहिमानं च ज्योतिष्टोमसमाहितः तेनेष्टं राजसूयेन अश्वमेधेन
नारद ७४ लिखेद्वा लेखयेद्वापि पूजयेद्वापि पुस्तकं तस्य गृहे स्थिरा लक्ष्मीः सुप्रसन्ना भविष्यति ७५ उपाख्या
नमिदं पुण्यं गृहे तिष्ठति पुस्तकं सर्पाग्निचोरजनितं भयं तत्र न विद्यते ७६ श्राद्धकाले पठेद्यस्तु गयामाहात्म्य
मुत्तमं विधिहीनं तु संपूर्णं पितॄणां तु गयासमं यानि तीर्थानि त्रैलोक्ये तानि तिष्ठन्ति तत्र वै येन ज्ञातं गयाख्यानं
श्रुतं वा पठितं मुने ७८ सोऽपि तत्फलमाप्नोति समग्रं नात्र संशयः सूत उवाच सनत्कुमारो मुनिपुंगवाय पुण्यं
कथां चाथ निवेद्य भक्त्या स्वमाश्रमं पुण्यवनैरुपेतं विसृज्य संगीतगुरुं जगाम ७९ इति श्रीवायुपुराणे श्वेत
वाराहकल्पे गयामाहात्म्ये अष्टमोऽध्यायः ॥८॥ ॥*॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥

